॥ श्रीः ॥

# न्यायभास्करखण्डनम्

# माध्वचन्द्रिकाखण्डनं च ।

चेरुविशनल्लूरग्रामवास्तव्यैः श्रुतिस्मृतीतिहास-

पूर्वोत्तरमीमांसादिशास्त्रार्थपारङ्गतैः

महामहोपाध्यायैः

श्रीरामसुब्रह्मण्यशास्त्रिभि

र्विरचितम् ।

*Published and Sold by I. D. Gupta & Sons,*

PROPRIETORS,

THE CHOWKHAMBA SANSKRIT SERIES OFFICE

BENARES CITY.

*Printed by Jai Krishna Das Gupta*

*at the Vidya Vilas Press,*

BENARES.

1919.

॥ श्रीः ॥

# शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् । | शुद्धम् |
|---|---|---|---|
| १ | ८ | रुद्धेश्य | रुद्देश्य |
| १ | १५ | च्छेदेनोद्देश्येत्व | च्छेदेनोद्देश्यत्व |
| ३ | २०-२१ | कारणस्य] [विषयचैतन्य | कारणस्य विषय-चैतन्य |
| ४ | ४ | विवक्षणीयं ब्रह्मेत्या-दिपदेन, | विवक्षणीयं, ब्रह्मे-त्यादिपदेन |
| ५ | १० | ज्ञाननमिति | ज्ञानमिति |
| ६ | ८ | तद्भेदत्वव | तद्भेदवत्त्व |
| ” | १७ | विशिष्ठत्वात् | विशिष्टत्वात् |
| ८ | १४ | र्थकः, श- | र्थकः, शं- |
| ९ | ७ | स्वीकर्तृणा | स्वीकर्त्रा |
| ” | २२ | अनुमितिनिष्ठ | अनुमितिहेतुनिष्ठ |
| १० | १० | शुद्धनिष्ठताभावात्शु, | शुद्धनिष्ठत्वाभावात् शु |
| ” | २२ | ब्रह्मप्रमे | ब्रह्मप्रमे |
| ” | २३ | नुमितितिषय | नुमितिविषय |
| ११ | २५ | ज्ञानलवैक्षण्यं | ज्ञानवैलक्षण्यं |
| १२ | ५ | क्षण्यात्, ज्ञान- | क्षण्यात् ज्ञान- |

| पृ० | पं० | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १३ | १४ | घटभूल | घटभूतल |
| ” | १७ | विशेषणनिष्ट | विशेषणनिष्ठ |
| ” | २२ | भेदसमाधिकरण | भेदसमानाधिकरण |
| १२ | २ | त्वदुक्तावशि | त्वदुक्ताविशि |
| १५ | ११ | शङ्कावारणार्थ | शङ्कावारणार्थं |
| ” | १५ | वभासकत्वात्, | वभासकत्वात् |
| ” | १६ | द्विपयत्वासम्भवात । | द्विषयत्वासम्भवात् |
| ” | २५ | ज्ञानमि | ज्ञानमि |
| ” | ” | वृत्तिविषयत्वाऽस-म्भवेन- | वृत्तिविषयत्वेऽसम्भवेन |
| १६ | २१ | स्वस्याऽाप | स्वस्याऽपि |
| ” | २३ | पहितसत्ता, | पहितसत्ता |
| १७ | ३ | त्म्याद्रपं | त्म्याद्रूपं |
| २० | २५ | समनैय्यत्यं | सामनैयत्यं |
| २४ | २० | शाक्तिरूप्याभाव | शुक्तिरूप्याभाव |
| ” | २१ | लघुचन्द्रिकाः । | लघुचन्द्रिका । |
| ” | २५ | प्रतिभासिक | प्रातिभासिक |
| २५ | ११ | पटे तस्य | घटे तस्य |
| २८ | ५ | समानाधिकरण्येन | सामानाधिकरण्येन |
| २९ | २ | चालिनीय– | चालनी– |
| ” | ५ | भावावच्छेकतायाः | भाववाच्छेदकतायाः |
| ३० | २ | द्वयस्यांऽ | द्वयस्याऽ |
| ३१ | १८ | प्रतियोगकत्वेन | प्रतियोगिकत्वेन |
| ३२ | ६ | व्यवहारिक | व्यावहारिक |

| पृ० | पं० | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३४ | १४ | काकोपलाक्षितस्य | काकोपलक्षितस्य |
| ४१ | १२ | भावंच्छेदो | भावच्छेदो |
| ४२ | १० | त्वाधिकरण | व्यधिकरण |
| ४८ | २४ | चिद्भावापात्तिः | चिद्भावापत्तिः |
| ” | २५ | सर्वमुत्यङ्गीतृ | सर्वमुत्त्यङ्गीकर्तृ |
| ५२ | १४ | तत्रेच्छानुत्पत्त्या | तत्रेच्छानुत्पत्त्या |
| ७१ | १२ | यत्त्म् । | त्यम् । |
| ८२ | १० | अहं प्रत्यय | अहंप्रत्यय |
| ८३ | १७ | सम्पत्त्यनन्तम् | सम्पत्त्यनन्तरम् |
| ८४ | ६ | अधिकार्यत्वात् | धिकार्यत्वात् |
| ८९ | २० | रूरूप | रूप |
| ९२ | २४ | क्षुन्ण | क्षुण्ण |
| ९३ | २१ | जिसापदं | जिज्ञासापदं |
| ” | २३ | चिचार | विचार |
| ९४ | १४ | प्रसङ्गगतम् | प्रसङ्गतम् |
| ९५ | १४ | भाष | माष |
| ९६ | २४ | तंकतव्य | तकर्तव्य |
| ९९ | ११ | चिचार्यते | विचार्यते |
| १११ | २० | मार्गीव | मार्गवि |
| ११२ | २० | त्ववान्त | त्ववान्तर |
| *११० | ५२ | नव्य– | तव्य– |

*सीसकाक्षरयोजकदोषेण पुटसङ्ख्यासु १०५–११२ पर्यन्ता. सङ्ख्याः द्विवारं मुद्रिताः। अग्रे च ता अनुसृत्यैव सङ्ख्याङ्कनं कृतमिति मन्तव्यम् ।

श्रीरामाय नमः ।

# न्यायभास्करखण्डनम् ।

लघूपपदचन्द्रिका गुणगणैः समुज्जृम्भते
तदीयगुणभावनाविरहिणा त्वनन्तेन यः ॥
कृतो हि नयभास्करस्तमहमद्य सद्युक्तिभि-
श्छिनद्मि रघुमण्डनस्मरणधारयाऽपारया ॥ १ ॥

विमतं मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वादिति मिथ्यात्वानुमानानि । सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वपक्षे विमतपदं ब्रह्मप्रमातिरिक्ताबाध्यं मिथ्या न वेतिसंशयविशेष्यतावच्छेदकावच्छिन्नपरम् । अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वपक्षे सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं मिथ्या न वेतिसंशयविशेष्यतावच्छेदकावच्छिन्नपरम् । सामानाधिकरण्येनोद्देश्यत्वपक्षे शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मप्रमातिरिक्ताबाध्यत्वस्य विमतपदार्थपक्षघटकविमतिरूपसंशयविषयतया निवेशः । अवच्छेदकावच्छेदेनोद्देश्येत्वपक्षे तुच्छे बाधवारणार्थं सत्त्वेनप्रतीत्यर्हत्वस्य, ब्रह्मणि बाधवारणार्थं चिद्भिन्नत्वस्योक्तविमतिविषयतया निवेशः । 'ब्रह्मप्रमा'इत्यादिविशेषणत्रयस्य मेलनं तु नाऽस्ति, सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मप्रमातिरिक्ताबाध्यत्वं पक्षविशेषणम् । अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तु तुच्छे ब्रह्मणि च बाधवारणाय इतरविशेषणद्वयमित्यद्वैतसिद्धिभावार्थः, ब्रह्मप्रमातिरिक्ताबाध्यत्वं

पक्षविशेषणम्, तन्मात्रं पक्षतावच्छेदकमिति यावदिति लघुचन्द्रिकाग्रन्थस्वारस्यात् ।

यत्तु न्यायभास्करे विमतत्वस्य संशयविषयत्वरूपस्य, विषयतासम्बन्धेन संशयरूपस्य वा पक्षतावच्छेदकत्वे ब्रह्मतुच्छयोर्बाध इत्युक्तं, तन्न, अनुक्तोपालम्भनत्वात् ।

यत्तु विषयत्वमात्रमेव पक्षतावच्छेदकमस्त्विति, तन्न, ब्रह्मणि बाधापत्तेः ।

यत्तु प्रपञ्चसत्यत्ववादिभिरनिर्वचनीयशुक्तिरूप्यानङ्गीकारेण तत्र सिद्धसाधनं न भवतीत्यतो ब्रह्मप्रमेत्यादि विशेषणव्यर्थमिति, तन्न । भट्टभास्करानुयायिना केनचित् यदि तस्य मिथ्यात्वमुच्येत तदा तेन सह विप्रतिपत्तिदशायां तादृश विशेषणस्य सार्थकत्वात् । यद्वा शुक्तिरूप्यमिथ्यात्ववादिनः कस्यचिदभावेऽपि न क्षतिः, ये सर्वमेव सत्यमिति वदन्ति, तान् प्रति दृष्टान्तसिद्ध्यर्थं शुक्तिरूप्ये मिथ्यात्वं प्रथमं प्रसाध्य तद्भिन्ने मिथ्यात्वमुक्तानुमानेन साधनीयमिति शुक्तिरूप्ये सिद्धसाधनं स्यादिति तद्वारकतयोक्तविशेषणं सार्थकमिति लघुचन्द्रिकाग्रन्थेन समाहितत्वात् ।

यत्तु भट्टभास्करमतानुयायिनं कञ्चन वादिनं प्रकल्प्य प्रकल्पितवादिमते सिद्धसाधनवारकतया उक्तविशेषणसार्थक्ये ब्रह्मप्रमातिरिक्ताबाध्यभूतमिथ्याभूतरजतवादिनोऽपि कल्पनसम्भवेन सिद्धसाधनं पुनरपीति,

तन्न, यद्वा शुक्तिरूप्यमिथ्यात्ववादिनो भट्टभास्करमतानुयायिनः कस्यचिदभावेऽपि न क्षतिरिति लघुचन्द्रिकाग्रन्थेनाऽकल्पितवादिन एव वादार्हत्वाभिधानात्, अन्यथा कल्पितस्याऽपि वादार्हत्वे कल्पनाया निरङ्कुशत्वेन कस्यचिदभावेऽपी-

त्वस्याऽसाङ्गत्यापत्तेः ।

यत्तु प्रातिभासिकचिद्भेदस्य ब्रह्मण्यपि सम्भवेन स्वसमानसत्ताकचिद्भेदस्यैव चिद्भिन्नत्वमित्यनेन विवक्षणीयतया प्रातिभासिके चिद्भेदस्य व्यावहारिकत्वेन स्वसमानसत्ताकचिद्भेदवत्स्वरूपपक्षतावच्छेदकाक्रान्तत्वाभावादेव वारणात् ब्रह्मप्रमेत्यादिविशेषणं व्यर्थमिति,

तन्न, विशेषणत्रयमेलनविरोध्युदाहृताद्वैतसिद्धिलघुचन्द्रिकाग्रन्थार्थानवधारणनिमित्तत्वात् ।

यत्तु इदं रजतं ब्रह्मप्रमातिरिक्ताबाध्यमिति भ्रमे तादृशाबाध्यत्वविशिष्टरजतस्याऽनिर्वचनीयस्योत्पत्त्या तत्र पुनरपि सिद्धसाधनमिति,

तन्न, वादिमतरीत्या सिद्धसाधनस्य दोषत्वेऽनुमानमात्रोच्छेदापत्त्या प्रतिवादिमत एव तस्य वक्तव्यत्वादिति त्वयैव न्यायभास्करेऽव्यवहितपूर्वग्रन्थे लिखितत्वात्, उक्तविशिष्टभ्रमस्य तद्विषयानिर्वचनीयस्य च प्रतिवादिनाऽद्वैतिभिन्नेनाऽस्वीकृततया प्रतिवादिना त्वत्प्रमुखेन सिद्धसाधनकथनासम्भवात् ।

यत्तु अभानापादकाज्ञानं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठं, असत्त्वापादकाज्ञानमन्तःकरणावच्छिन्नसाक्षिचैतन्यनिष्ठमिति सिद्धिकारमतं परोक्षभ्रमस्थलेऽपि प्रातिभासिकोत्पत्त्यर्थं अपरोक्षज्ञाननाश्यासत्त्वापादकाज्ञानस्याऽपि तत्परिणामिकारणस्य विषयचैतन्यनिष्ठत्वमावश्यकमितिलघुचन्द्रिकाग्रन्थार्थविरुद्धमिति, तन्न, सिद्धिग्रन्थस्य परोक्षभ्रमस्थले प्रातिभासिकानभ्युपगन्तृप्राचीनवेदान्तिमताभिप्रायकत्वात् । डित्थडपित्थयोर्मातरि डित्थमातेतिवदन्तःकरणावच्छिन्नसाक्षिचैतन्यविषयावच्छिन्नब्रह्मचैतन्योभयनिष्ठस्याऽप्यसत्त्वापादकाज्ञानस्य

साक्षिचैतन्यनिष्ठत्वोक्तौ विरोधाभावाच्च ।

एतेन ब्रह्मज्ञानमात्रबाध्ये ब्रह्मण्यारोपितध्वंसप्रतियोगित्वरूपप्रातिभासिके सिद्धसाधनवारणाय ब्रह्मान्यविषयकज्ञानाबाध्यत्वं विवक्षणीयं, ब्रह्मप्रमेत्यादिपदेन ब्रह्म ध्वंसाप्रतियोगीत्युक्तप्रातिभासिकबाधकज्ञाने ध्वंसाप्रतियोगित्वरूपब्रह्मान्यविषयकत्वात् प्रातिभासिकवारणमिति वक्तुं न शक्यते, अहं ब्रह्माऽस्मि, घटो विनाशीतिसमूहालम्बनब्रह्मज्ञानस्य विद्यारण्यादिभिः प्रपञ्चबाधकत्वस्वीकारादाश्रयासिद्ध्यापत्तेः ।

सप्रकारकज्ञानाबाध्यत्वं तदर्थ इति विवक्षणं न सम्भवति, इदन्त्वावच्छिन्ने तत्त्वावच्छिन्नभेदे नाऽयं स इतिभ्रमसिद्धे प्रातिभासिके सोऽयमिति तत्तेदन्तोपलक्षितस्वरूपविषयकनिर्विकल्पकधीबाध्ये सिद्धसाधनात् ।

ब्रह्मान्याविषयकत्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावत्स्व—स्वोपादानान्यतरत्वावच्छिन्नाभावकान्यत्वं तदर्थः, शुक्तिरूप्यतदुपादानान्यतरत्वावच्छिन्नाभावस्य शुक्तिविषयकत्वावच्छिन्नप्रयोजकताकत्वात्, उक्तध्वंसप्रतियोगित्वस्याऽनुपदोक्तभेदस्य च तादृशत्वाद्व्यावृत्तिरिति विवक्षणं न सम्भवति, एकाज्ञानपक्षे शुक्तिरूप्यावारणात् ।

ब्रह्मान्यविशिष्टान्यत्वं तदर्थः, वैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन । स्वं शुक्त्यादिः । स्वाधिकरणत्वं च स्वविषयकनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकता च स्वविशिष्टप्रतियोगिताकभेदवत्वसम्बन्धेन । स्वं—घटादिः । स्ववैशिष्ट्यं च स्वपूर्वत्व—स्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसम्बन्धेन । तथा च ब्रह्मान्यशुक्तिविषयकनिश्चयनिष्ठो यः स्वपूर्व-

त्व—स्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसम्बन्धेन घटादि-विशिष्टं यत् घटज्ञानशुक्तिज्ञानादि, तत्प्रतियोगिकभेदवत्त्वसम्बन्धेन घटादिमद्भेदः, तादृशभेदप्रतियोगितावच्छेदकं घटादि, तदन्यत्वं शुक्तिरूप्ये । येन स्वपदेन घटादि गृहीतं, तेन शुक्तिरूप्यग्रहणे स्वपूर्वत्वस्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसम्बन्धेन शुक्तिरूप्यवत् यत् शुक्तिरूप्यज्ञानघटज्ञानादि, तद्भेदवत्त्वसम्बन्धेन शुक्तिरूप्यविशिष्टप्रतियोगिकभेदः ब्रह्मान्यशुक्तिप्रमानिष्ठो न सिद्ध्यतीति,

तदपि न सम्भवति, ब्रह्मत्वोपलक्षितप्रतियोगिकज्ञानत्वोपलक्षितानुयोगिकभेदे ब्रह्म न ज्ञाननमितिभ्रमसिद्धप्रातिभासिके 'सत्यं ज्ञानं'इतिशोधकवाक्यजन्यधीबाध्ये सिद्धसाधनात्,

ब्रह्मानिष्ठानिरवच्छिन्नविषयताशून्यज्ञानाबाध्यत्वं तदर्थ इत्यपि न, अनुपदोक्तसिद्धसाधनात् ।

जीवत्वब्रह्मत्वाद्युपलक्षितब्रह्मनिरूपितविषयताकान्यज्ञानाबाध्यत्वं तदर्थः, सत्यमित्यादिवाक्यजन्यज्ञानविषयत्वस्य सत्यत्वाद्युपलक्षितब्रह्मविषयत्वेऽपि जीवत्वाद्युपलक्षितानिरूपितत्वान्नोक्तसिद्धसाधनमित्यपि न, समानाकारकज्ञाने विषयताभेदाभावात् ।

महावाक्यजन्यतानवच्छेदकविषयताविशिष्टान्यत्वं तदर्थः,वैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन । स्वं—उक्तविषयता । स्वाधिकरणत्वं—,स्वनिरूपकनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकता स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । स्वं—घटादि । स्वनिष्ठावच्छेदकता उक्तान्यतरसम्बन्धेन ।

तदपि न, महावाक्यानां परस्परजन्यबोधे व्यभिचारवार-

णायाऽव्यवहितोत्तरत्वस्य जन्यतावच्छेदकत्वे तदीयविषयताया अनवच्छेदकत्वेनाऽऽश्रयासिद्धेः ।

महावाक्याजन्यज्ञानविशिष्टान्यत्वं तदर्थः, ज्ञानवैशिष्ट्यं चाऽऽधेयतासम्बन्धेन। आधेयता च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । स्वं -शुक्तिरूप्यम्। स्वनिष्ठावच्छेदकतास्वपूर्वत्वस्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसम्बन्धेन । तथा च स्वपूर्वत्व–स्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसम्बन्धेन शुक्तिरूप्यविशिष्टं घटज्ञानादि, तद्भेदत्ववसम्बन्धेन महावाक्याजन्यशुक्तिज्ञानस्य शुक्तिरूप्याधारतया उक्तभेदवत्त्वसम्बन्धावच्छिन्नाधेयतासम्बन्धेन उक्तज्ञानविशिष्टत्वं शुक्तिरूप्यस्येति,

तदपि न । महावाक्यजन्यनिर्विकल्पकधीकाले विद्यमानं यद्घटादिज्ञानं, उक्ताधेयतासम्बन्धेन प्रपञ्चस्य तद्विशिष्टत्वेनाऽऽश्रयासिद्धेः ।

अव्यवहितोत्तरत्वसम्बन्धेन महावाक्यविशिष्टान्यद्यज्ज्ञानं, उक्ताधेयतासम्बन्धेन तद्विशिष्टान्यत्वं तदर्थः, महावाक्यजन्यधीकालीनस्य घटादिज्ञानस्य शोधकवाक्यजन्यज्ञानस्य चाऽव्यवहितोत्तरत्वसम्बन्धेन महावाक्यविशिष्टत्वात् तदन्यत्वाभावेन व्यावृत्तिरिति, तदपि न, अखण्डाकारब्रह्मज्ञानबाध्ये तदव्यवहितपूर्ववृत्तिप्रातिभासिके सिद्धसाधनात् ।

स्वजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वसम्बन्धेन ध्वंसविशिष्टान्यत्वमपि पक्षविशेषणं दत्वा उक्तप्रातिभासिकव्यावृत्तिः कार्या, तादृशप्रातिभासिकस्य मूलाज्ञानध्वंसजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वात् तादृशप्रातिभासिकोपादानाज्ञानस्याखण्डाकारवृत्त्यसमानविषयकत्वेन तन्नाश्यत्वायोगात् जीवेशभेदादिरूपानाद्यन्तराणामेव मूलाज्ञाननाशनाश्यत्वादिति,

तदपि न, एवमपि तादृशप्रातिभासिकोपादानाज्ञाने सिद्धसाधनादित्याद्यपास्तम् ।

दूष्यतया ब्रह्मज्ञानातिरिक्ताबाध्यत्वार्थानां त्वल्लिखितानां मध्ये कस्यापि गौडपादादिगौडब्रह्मानन्दान्ताद्वैतिसार्वभौमैरनुक्ततया अनुक्तोपालम्भनत्वात्, प्रत्युत त्वल्लिखितपक्षविरुद्ध एव ब्रह्मप्रमातिरिक्ताबाध्यत्वशब्दार्थः श्रीगौडब्रह्मानन्दस्वामिभिः गुरुचन्द्रिकायां ब्रह्मप्रमातिरिक्ताबाध्यत्वं पल्लवाज्ञानतत्प्रयुक्तान्यतरभिन्नत्वं, पल्लवाज्ञानानङ्गीकारे प्रातिभासिकभिन्नत्वमित्यर्थकग्रन्थेन कथितः, तदुपरि दूषणमनुक्त्वा त्वत्कृताकाण्डताण्डवस्त्वयैवानुमोदनीयः ।

प्रातिभासिकः प्रातिभासिकभिन्न इति भ्रमसिद्धप्रातिभासिकभिन्नप्रातिभासिके प्रातिभासिकभिन्नत्वसत्त्वात् सिद्धसाधनमिति त्वया वक्तुं न शक्यते, तादृशभ्रमसिद्धविशिष्टप्रातिभासिकस्याद्वैतिमात्रस्वीकृतत्वेनान्यैरस्वीकृतत्वेनाऽन्यैस्तत्र सिद्धसाधनस्य वक्तुमशक्यत्वात्, उक्तभ्रमस्य वह्न्यभाववान् वह्न्यभाववद्भिन्न इतिवदाहार्यतया उपादानाज्ञानाभावेन तत्र प्रातिभासिकानुपपत्तेश्च, परमतसिद्धावेव सिद्धसाधनं न स्वमतमात्रसिद्धौ, तर्ह्यनुमानमात्रोच्छेदापत्तेरिति त्वयैव न्यायभास्करग्रन्थस्याऽऽदौ लिखितत्वाच्च ।

यत्तु त्वत्कृतकोलाहलमध्ये द्वितीयाभावो ब्रह्मनिष्ठ इत्याद्युद्बुद्धसंस्कारस्य द्वितीयत्वावच्छिन्ने सद्रूपब्रह्मतादात्म्यज्ञानप्रतिबन्धकत्वं न घटत्वावच्छिन्ने सत्तादात्म्यज्ञानप्रतिबन्धकत्वं, घटाभावो ब्रह्मनिष्ठ इत्युद्बुद्धसंस्कारस्य तत्प्रतिबन्धकत्वेऽपि पटाभावो ब्रह्मनिष्ठ इत्युद्बुद्धसंस्कारो नास्ति, तद्वस्तुविषयकाहंब्रह्माऽस्मीतिसमूहालम्बनसम्भव इति लिखितं,

तन्न, व्यापकधर्मावच्छिन्नाभावविषयकोद्बुद्धसंस्कारस्य व्याप्यधर्मावच्छिन्नाभावविषयकोद्बुद्धसंस्कारकार्यकारित्वस्याऽनुभवसिद्धत्वेन यादृशव्यक्त्यभावे ब्रह्मनिष्ठ इत्युद्बुद्धसंस्कारो नाऽस्ति, तद्व्यक्तित्वस्याऽपि द्वितीयत्वव्याप्यत्वेन द्वितीयाभावो ब्रह्मनिष्ठ इत्युद्बुद्धसंस्कारस्य तादृशव्यक्तौ सत्तादात्म्यावगाहिज्ञानप्रतिबन्धकत्वस्य निष्प्रत्यूहत्वात्, 'नेह नानाऽस्ति किञ्चन' इति श्रुतौ उद्देश्यतावच्छेदकतावच्छेदकनिषेध्यतावच्छेदकयोः दृश्यत्वतुच्छसाधारणद्वितीयत्वयोः असमानियतत्वेन न परस्परधर्मावच्छिन्नतदभावयोर्विरोध इत्यतो दृश्यविशिष्टे द्वितीयत्वावच्छिन्नाभावावगाहनात् मिथ्यात्वानुमितेरनाहार्यत्वेऽपि परोक्षत्वादेव न प्रपञ्चधीबाधकत्वं, नाऽप्यज्ञाननिवर्तकत्वं, किं तु प्रपञ्चसत्यताबुद्धावविश्वासापादकत्वमात्रम् ।

यत्तु 'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र तं विदित्वैवेति योजना, एवकारश्चाऽयोगव्यवच्छेदकत्वरूपव्यापकत्वार्थकः, शङ्खः पाण्डुर एवेतिवत् विशेषणसम्बन्धित्वात् तद्विषयकवेदनहेतुकत्वे मुक्तित्वव्यापकत्वबोध इति,

तत्तुच्छम् । शङ्खः पाण्डुर इत्यत्र विशेषणतावच्छेदकपाण्डुरत्वे एवकारेण विशेष्यतावच्छेदकशङ्खत्वव्यापकत्वबोधवत् विशेषणीभूतक्त्वाप्रत्ययार्थतावच्छेदकतद्विषयकवेदनहेतुकत्वत्वे मुक्तित्वव्यापकत्वबोधापत्तेः, तत्र च मुक्तित्वव्यापकत्वं बाधितं, पाण्डुरत्वत्वे शङ्खत्वव्यापकत्ववत्, किं च समानविभक्तिकपदद्वयस्थल एव शङ्खः पाण्डुर एव, चैत्रः पचत्येवेत्यादौ विशेषणसम्बन्ध्येवकारस्याऽयोगव्यवच्छेदार्थकत्वनियमः, न प्रकृते तयोः समानविभक्तिकत्वमस्ति, सत्यमेव वदेदित्यत्राऽपि नियमविधिस्थले अध्याहृतस्य पुरुषपदस्य समानविभक्तिकत्वमस्ति, तथ-

बन्तस्थले कुत्राऽपि द्वितीयान्तपदोत्तरं स्थितस्यैवकारस्य न ल्यबन्तपदोत्तरं योजना दृश्यते, अन्यथा अन्नं भुक्त्वैव व्रजतीत्यादिस्थले अन्नमेव भुक्त्वा व्रजतीति स्वारसिकप्रयोगापत्तेरित्युक्तम् ।

इति न्यायभास्करखण्डने ब्रह्मप्रमातिरिक्ताबाध्यत्वसमर्थनं समाप्तम् ।

असति बाधवारणार्थं सत्तादात्म्यमनस्त्वगातिस्वीकर्तृणा सह वाददशायां निवेशनीयम्, पक्षविशेष्यकसाध्यप्रकारकज्ञानजनकाज्ञानप्रतिबन्धकतावच्छेदकविषयतावच्छेदकधर्मवत्त्वं न बाधत्वम्, असद्विशेष्यकमिथ्यात्वप्रकारकज्ञानजनकासद्विषयकाज्ञानस्य सिद्धान्तेऽस्वीकृतत्वेन मिथ्यात्वाभाववदसतो बाधत्वानापत्तेः, किन्तु स्वान्यूनसत्ताकस्वाभाववत्पक्षत्वम्, स्वान्यूनसत्ताकत्वानिवेशे पर्वतो वह्निमानित्यादौ प्रातिभासिकवह्न्यभाववत्पर्वतस्यापि बाधत्वापत्तेः । असति बाधज्ञानं च मिथ्यात्वाभाववत् चिद्भिन्नमित्याकारकं, न तु मिथ्यात्वाभाववदसदित्याकारकम्, समानधर्मितावच्छेदकरूपपक्षतावच्छेदककसाध्याभावज्ञानस्य बाधज्ञानत्वेन असन्मिथ्यात्वाभाववादिति ज्ञानस्य चिद्भिन्नत्वरूपपक्षतावच्छेदककत्वाभावेन बाधज्ञानत्वासम्भवात् । बाधज्ञानस्य ज्ञायमानबाधस्य वा प्रतिबन्धकत्वं अनुमितिनिष्ठकार्यानुकूलशक्तिविघटकत्वं, न तु कारणीभूताभावप्रतियोगित्वं, प्रतिबन्धकेन शक्तिर्नश्यतीत्यनुभवात् । तथा च स्वान्यूनसत्ताकस्वाभावप्रकारकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकबुद्धित्वव्यापकप्रकृतानुमितिप्रतिबन्ध-

कतावच्छेदकविषयताश्रयस्वान्यूनसत्ताकस्वाभाववत्पक्षत्वं बाधत्वमिति निष्कर्षः ।

ब्रह्मणि बाधवारणार्थं चिद्भिन्नत्वविशेषणं शुद्धस्य वृत्तिविषयत्वपक्षरीत्या ।

यत्तु ब्रह्मणि प्रातिभासिकचिद्भिन्नत्वसत्वेन बाधापरिहारात् स्वसमानसत्ताकचिद्भिन्नत्वस्य निवेशनीयतया चिद्भिन्नत्वेनैव तुच्छवारणे सत्तादात्म्यं व्यर्थं, तुच्छे सत्ताभावेन स्वसमानसत्ताकचिद्भिन्नत्वाभावादिति, ।

तन्न, प्रातिभासिकोपादानपल्लवाज्ञानस्यावच्छिन्नचिन्निष्ठत्वेन शुद्धनिष्ठत्वाभावात् । शुद्धे प्रातिभासिकचिद्भिन्नत्वाप्रसक्त्या यथाश्रुतचिद्भिन्नत्वरूपपक्षतावच्छेदकानाक्रान्तत्वेन चिद्भेदे स्वसमानसत्ताकत्वस्याऽनिवेशनीयतया तुच्छे बाधवारणार्थं सत्तादात्म्यनिवेशावश्यकत्वात् ॥

यत्तु ब्रह्मतादात्म्यरूपसत्तादात्म्यं प्रपञ्चसत्यत्ववादिभिर्नाङ्गीकृतं इति सन्दिग्धासिद्धिरिति, ।

तन्न, ब्रह्म जगतः स्वरूपतः परिणाम्युपादानमिति वदता जगत्सत्यत्ववादिना यादवमिश्रेण जगति ब्रह्मतादात्म्यस्य स्वीकृतत्वेन सन्दिग्धासिद्ध्यभावात् ।

यत्तु प्रातीतिकसत्तादात्म्यव्यावृत्तसत्तादात्म्यस्य पक्षतावच्छेदककोटौ निवेशेन तुच्छबाधवारणस्य प्रातिभासिकरजतसिद्धसाधनवारणस्य च सम्भवे ब्रह्मप्रमेयादिविशेषणं व्यर्थमिति ।

तन्न, ब्रह्मप्रमेयस्य सामानाधिकरण्येनानुमितिविषयत्वं, सत्तादात्म्यस्यावच्छेदकावच्छेदेनानुमितिविषयत्वमिति सिद्धौ तट्टीकायां चोक्तत्वेन तयोर्मिलनस्यैवासम्भवत्या एकेनापरवैयर्थ्यकथनस्य भ्रान्तिनिमित्तत्वात् ।

यत्तु अनुयोगिरूपेण परिणममानाविद्याया एव तन्निष्ठसत्तादात्म्यरूपेण परिणाम इति नियमात्, अलीकरूपेणाविद्याया अपरिणामात्, तस्मिन्नाविद्यापरिणामरूपसत्तादात्म्यसम्भव इति लघुचन्द्रिकायामुक्तत्वेऽपि सदनुयोगिकतादात्म्यस्यापि सत्तादात्म्यतया तस्य च प्रतियोगितासम्बन्धेनालीकेऽपि सत्वात् सत्तादात्म्यविशेषणेन नालीकबाधवारणं सम्भवति, सत्प्रतियोगिकतादात्म्यस्य निवेशे तेनैव स्वस्मिन् स्वप्रतियोगिकतादात्म्यासम्भवात् सद्रूपब्रह्मबाधवारणे चिद्भिन्नत्वं व्यर्थमिति,।

तन्न । लघुचन्द्रिकायामेव सत्तादात्म्यादेव ब्रह्मबाधवारणे चिद्भिन्नत्वं मास्त्वित्युक्तत्वात् ।

यत्तु घटस्सन्निति प्रतीत्या घटे सत्तादात्म्यसिद्धावपि सति घटतादात्म्यं न सिध्यति, उपनीतं विशेषणतयैव भासते इति नैयायिकादिभिः उपनीतस्य विशेष्यतया भानानङ्गीकारात्, सतश्च उपनीतत्वादिति,

तन्न। घटस्सन्नितिवत् सन् घट इति प्रतीतेस्सर्वानुभवसिद्धतया नैय्यायिकप्रलापस्य त्वत्प्रलापतुल्यत्वात् घटस्सन् सन् घट इति प्रतीत्योर्वैलक्षण्यार्थं घटे सत्तादात्म्यमिव सति घटतादात्म्यरूपविषयस्वीकारावश्यकत्वाच्च ।

यत्तु विषयवैलक्षण्यादेव ज्ञानवैलक्षण्यस्वीकारे संयोगेन घटवद्भूतलं घटभूतलसंयोगा इति ज्ञानयोर्वैलक्षण्यं न स्यात्, विषयवैलक्षण्याभावादिति ।

तन्न । समूहालम्बने सर्वेषां विषयाणां स्वातन्त्र्यं विशिष्टज्ञाने तु विशेषणस्यास्वातन्त्र्यं भासत इति विषयवैलक्षण्यसत्त्वात् ।

यत्तु विषयितावैलक्षण्यात् ज्ञानवैलक्षण्यं, विषयितावैलक्षण्यं

च विषयवैलक्षण्यात् । घटवद्भूतलं घटभूतलमयोगा इति प्रतीत्यो-र्विषयवैलक्षण्याभावादेव विषयितामात्रवैलक्षण्येन ज्ञानवैलक्षण्यं, न तदर्थमुक्तविशिष्टबुद्धिसमूहालम्बनस्थलेऽपि विलक्षणविषयकल्पनमुचितमिति,

तन्न । क्वचिद्विषयवैलक्षण्याधीनविषयितावैलक्षण्यात्, ज्ञानवैलक्षण्यं, क्वचिद्विषयितामात्रवैलक्षण्यादिति स्वीकारस्य सर्वत्र विषयवैलक्षण्यात् वैलक्षण्यसम्भवे वक्तुमनुचितत्वात् । उक्तसमूहालम्बनविशिष्टबुद्धिस्थलेऽपि विषयवैलक्षण्यस्यानुभवसिद्धत्वेनापलपितुमशक्यत्वात् । स्वातन्त्र्यास्वातन्त्र्यरूपविषयवैलक्षण्यस्य सर्वैरवश्य स्वीकर्तव्यत्वाच्च विषयवैलक्षण्यादेव ज्ञानवैलक्षण्यं न तु विषयितामात्रवैलक्षण्यात्, अन्यथा बौद्धमतप्रवेशापत्तिरिति उदयनाचार्योक्तेः उक्तविशिष्टबुद्धिसमूहालम्बनस्थले त्वया परित्यक्ततया तत्स्थलांशे तव साकारज्ञानवादिबौद्धत्वापत्तिः ।

यत्तु भवता विशिष्टकेवलयोर्भेदाभेदस्वीकारेण विशिष्टकेवलविषययोस्तत्क्षणविशिष्टकेवलघटज्ञानयोर्विषयवैलक्षण्याद्वैलक्षण्यास्वीकारे घटस्य क्षणिकत्वापत्तिः तस्य क्षणरूपकालविशिष्टाभिन्नतया कालासम्बन्धित्वादिति,

तन्न । कालसम्बन्धित्व-कालसम्बन्धितादात्म्य-कालत्वान्यतमशून्यत्वस्यैव बौद्धत्वापादकक्षणिकत्वप्रयोजकतया तत्क्षणविशिष्टप्रतियोगिकतादात्म्यस्य केवलघटे सत्वेन बौद्धत्वापादकक्षणिकत्वाप्रसक्तेः ।

यत्तु समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञः प्रतियोगितादात्म्यविरुद्धत्वविशिष्टभेदबोधकत्वमतोविशिष्टसत्ता न सत्तेति न प्रयोगापत्तिः तत्र भेदाभेदस्वीकारात् ।

विभिन्नविभक्तिकोक्तस्थले तु नञः प्रतियोगिविरोधित्वविशिष्टा-त्यन्ताभावबोधकत्वमित्युक्तमयुक्तम्, वृक्षे न कपिसंयोग इति प्रत्ययस्य भ्रमत्वापत्तेरिति,

तन्न । तत्राऽप्येकाधिकरणावच्छेदेन विरोधात् ।

एतेन 'नेह नाने'ति श्रुतिजन्यबोधस्य प्रतियोगिविशिष्टे प्रतियोगि-विरुद्धाभावावगाहित्वावश्यकतया आहार्यत्वापत्तिरिति परास्तम् ।

उद्देश्यतावच्छेदकतावच्छेदकस्य दृश्यत्वस्य निषेध्यतावच्छे-दकस्यात्मभिन्नत्वस्य च भेदेनाहार्यत्वासम्भवात् । तदभेदस्थल एव तत्वात् ।

यत्तु भेदाभेदौ विरुद्धत्वान्नैकत्र सम्भवत इति ।

तन्न, एकस्मिन्नपि नीलमुत्पलमिति समानाधिकरणप्रमारूपा-बाधितप्रमाणसिद्धतया भेदाभेदयोरविरोधात् ।

यत्तु विशिष्टकेवलयोर्भेदस्वीकारे केवलघटे तद्व्यक्तित्वविशिष्ट-भेदसत्वेन घटभूलसंयोगस्य घटनिष्ठतयोक्तभेदसमानाधिकरणोक्त-संयोगमादाय घटस्तद्घटवानिति बुद्धेः प्रमात्वापत्तिरिति ।

तन्न, घटस्तद्घटवानिति बुद्धेः प्रमात्वस्येष्टत्वात् ।

यत्तु विशेषणनिष्ठप्रतियोगितानिरूपितत्वविशिष्टसम्बन्धानु-योगिताभानस्य विशिष्टबुद्धावङ्गीकरणमावश्यकमन्यथा घटस्त-द्घटवानिति बुद्धेः प्रमात्वापत्तेः, स्वस्मिन् स्वप्रतियोगि-ताविशिष्टसम्बन्धानुयोगिता तु नास्ति घटाभावस्तद्वानिति प्र-तीतेः प्रामाणिकतया क्वचिदभेदेऽप्याधाराधेयभावः स्वीक्रिय-तेऽस्माभिः, भेदसमाधिकरणसम्बन्धो विशिष्टबुद्धौ भासत इति भवत्पक्षे तु घटाभावो घटाभाववानिति बुद्धेः प्रमात्वानिर्वाह इति,

तन्न । घटप्रतियोगिकाभावत्वेन विशेष्यत्वं घटविरुद्धत्वविशि-ष्टत्वेन विशेषणत्वमिति रूपभेदेन भेदसम्भवात् । विशिष्टबुद्धिस्थले

भेदसमानाधिकरणसम्बन्धस्य घटाभावः घटाभाववानिति बुद्धेः प्रमात्वस्य च सम्भवे तदर्थं त्वदुक्तविशिष्टसम्बन्धस्य गुरुभूतस्य कल्पनाया असम्भवात् । मामहं जानामीत्यत्र रूपभेदेन कर्मत्वकर्तृत्वे स्वीकृत्य निर्वाहवत् घटाभावो घटाभाववानित्यत्र निर्वाहः ।

यत्तु परसमवेतक्रियाजन्यफलशालित्वरूपकर्मत्वशरीरे आत्यन्तिकभेदस्यैव घटकत्वमन्यथा मामहं गच्छामीत्यापत्तेरिति ।

तन्न । आत्यन्तिकभेदस्य घटकत्वे मामहं जानामि आत्मानमात्मना वेत्ति इत्यादिप्रयोगानुपपत्तेः औपाधिकभेदविवक्षायां मामहं गच्छामीतिप्रयोगस्त्विष्ट एव ।

यत्तु घटाभावस्तद्वानित्यत्र तत्पदेन एकत्वविशिष्टघटप्रतियोगिकत्वविशिष्टस्यैव पूर्वप्रकृतस्य परामर्शनीयतया विशेषणविशेष्ययोर्न रूपभेदेनापि भेदसम्भव इति ।

तन्न । यद्देवदत्ताश्रयस्तदानयेत्यादौ विशेषणीभूतदेवदत्तत्यागेन विशेष्यभूतासनत्वरूपस्यैव तत्पदेन परामर्शदर्शनेन एकत्वघटप्रतियोगिकत्वरूपविशेषणद्वयत्यागेन विशेष्यस्याभावस्य तत्तत्पदेन घटविरुद्धत्वेन ग्रहणे बाधकाभावात् । प्रक्रान्तस्य विशिष्टस्यैव सर्वनाम्ना ग्रहणमिति न नियमः यद्देवदत्ताश्रयस्तदानयेत्याद्यनुपपत्तेः ।

यत्तु एकत्र भेदाभेदस्वीकारे 'नैकस्मिन्नसम्भवात्' इति सूत्रविरोध इति ।

तन्न । सन्मात्रत्ववाद्यभ्युपगतसत्त्वासत्त्वमात्रवाद्यभ्युपगतासत्त्वयोः तत्तद्वादिवादकाले तत्तद्वादिरीत्याऽऽर्हतेन एकत्राङ्गीकारात्, तयोश्चात्यन्तविरोधेन एकत्रासम्भवस्य तत्र कथनात्, भेदाभेदयोश्चैकत्र समानाधिकरणप्रतीतिसिद्धयोः एकेन स्वीकृतयोरुक्तसूत्राविषयत्वात् ।

यत्तु वृत्तिज्ञानीयसम्बन्धानां विषयनिष्ठानामाकाराख्याना ज्ञातोघटः ज्ञातः पट इत्यादिप्रतीतिविषयज्ञानविषयत्वरूपत्वसम्भवे आकाराख्यवृत्तिज्ञानविषयत्वातिरिक्तस्य चित्तादात्म्यरूपविषयत्वस्य घटपटादिनिष्ठस्यानेकस्य ज्ञातोघट इत्यादिप्रतीत्या सिद्धि स्वीकृत्य विषयेषु चिद्रूपसत्तादात्म्यस्थापनमप्रामाणिकमिति ।

तन्न । 'कामस्संकल्पोविचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'इति श्रुत्या घटाद्याकाराधयः मनोवृत्तित्वोक्त्या घटादीनां वृत्तिविषयत्ववत् 'तस्य भासा सर्वमिदं विभातीति' श्रुत्या चैतन्यभासा प्रकाश्यत्वोक्त्या चिद्रूपज्ञानविषयत्वमपि स्वीकर्तव्य चिद्रूपज्ञानभासः सर्वदा सत्त्वात् सदा घटादिभानापत्तिरित्याशङ्कावारणार्थं यदा घटाद्याकारावृत्तिस्तदा तद्वृत्त्युपारूढेन चैतन्यभासा घटादिभानं, न सर्वदा, स्वसत्ताऽव्यभिचरितप्रकाशे सुखादौ प्रत्यक्षवृत्त्यङ्गीकारप्रयोजनाभावात् सुखाभिव्यक्तचैतन्यभासा सुखादिभानं, न तत्र वृत्तिः, साक्षिचैतन्यस्य वर्तमानमात्रावभासकत्वात्, चैतन्यरूपस्य शुद्धब्रह्मणः स्वस्य स्वविषयत्वाभावेन चिद्विषयत्वासम्भवात् । 'दृश्यते त्वग्र्यया बुद्ध्या' 'मनसैवाऽनुद्रष्टव्यम्'इत्यादिश्रुत्यर्थवत्त्वाय च वृत्तिविषयत्वमात्रं स्वीक्रियते, अत एव 'यत्तद्द्रेश्य'मिति श्रुतिः चिद्विषयत्वाभावमात्राभिप्राया इतिरीत्या श्रुतिप्रमाणसिद्धे चिद्रूपसत्तादात्म्ये घटादिनिष्ठे अप्रामाणिकत्वाभिधानस्य श्रुत्यान्ध्यनिमित्तत्वात् । न च घटादीनां चिद्विषयत्ववृत्तिविषयत्वोभयस्वीकारे ज्ञातो घट इति प्रतीतिः चिद्विषयत्वरूपचित्तादात्म्यमेव विषयीकरोति, न वृत्तिविषयत्वमिति निर्बन्धे न निमित्तमिति शङ्क्यम् । सुखं ज्ञानमित्यादिप्रतीतिविषयत्वस्य वृत्तिविषयत्वाऽसम्भवेन चि-

द्विषयस्व एव वक्तव्यतया तत्समानाकारज्ञातोघट इत्या- दावपि तस्यैव लाघवात् प्रतीतिविषयत्वस्य वक्तव्यत्वात् । यदि च स्वसत्ताऽव्यभिचरितप्रकाशे शुक्तिरूप्ये वृत्तिवत्सुखा- दावपि प्रत्यक्षवृत्तिः स्वीक्रियते इत्यद्वैतिनां पक्षान्तरमाश्री- यते, तदाऽपि ज्ञातो घट इत्यादिप्रतीतिः चिद्विषयत्वमेव घटा दौ विषयीकरोति, न वृत्तिविषयत्वं, ज्ञाधातोः चिद्रूपज्ञान एव मुख्यत्वात् वृत्तौ तु जडतया चिद्रूपप्रकाशरूपत्वाभावेन गौण- त्वात्, सम्भवति मुख्यग्रहणे ऽमुख्यग्रहणासम्भवात ।

यत्तु एकस्य तादात्म्यस्य सम्बन्धिभ्यामतिरिक्तस्याऽनुभ- वबलात् स्वीकरणमित्ययुक्तम्, तादात्म्यस्य विशेषणरूपत्वसम्भ- वादिति ।

तन्न, स्वं न स्वीयमित्यनुभवविरोधेन विशेषणस्य वि- शेषणप्रतियोगिकत्वाभावेन विशेषणसम्बन्धत्वासम्भवात् ।

यत्तु समवायस्य सम्बन्धिभ्यामतिरिक्तस्य स्वीकारे तस्या- पि धर्मिसम्बन्धनार्थं सम्बन्धान्तरं स्यादित्यनवस्थायाः 'स- मवायाभ्युपगमाच्च साम्यादनवस्थितेः' इति सूत्रोक्ततया तन्न्या- यस्तादात्म्येऽपि प्रसज्यत इति,

तन्न । समवायस्य नैयायिकैः पदार्थविभाजकधर्मवत्त्वेन स्वी- कृतत्वात, द्रव्यगुणादिपदार्थवत् स्वभिन्नसम्बन्धापेक्षा धर्मिस- म्बन्धार्थं स्यादित्यनवस्थोक्ता सूत्रे, तादात्म्यस्य पदार्थवि- भाजकधर्मानाक्रान्ततया स्वस्याऽपि स्वसम्बन्धत्वात् सूत्रोक्तान- वस्थाप्रसक्त्यभावात ।

यत्तु विशिष्टशुद्धोपाहितसत्ता, तयोस्तादात्म्यं, एवं नील- घटयोरपीत्ययुक्तं, एकघटाश्रयाणां रूपरसादीनामपि तत्तदुप- हितसत्तारूपतादात्म्यमादाय रूपं रस इति प्रतीत्यापत्तेरिति,

तत्तुच्छम्, 'यद्विशिष्टचैतन्ये यदारोपितं तयोरेवोक्तसत्तादात्म्यं, न तु रूपविशिष्टचैतन्ये रस आरोपितः,येन रूपरसयोस्तादात्म्याद्रूपं रस इति सामानाधिकरण्यप्रसक्तिः'इतिलघुचन्द्रिकाग्रन्थान्न्यात् ।

इति न्यायभास्करखण्डने सत्तादात्म्यसमर्थनं समाप्तम् ।

ब्रह्मणि बाधवारणाय चिद्भिन्नत्वं, तच्च चित्त्वोपलक्षितप्रतियोगिकभेदवत्त्व, तेन शुद्धचिति विशिष्टचिद्भेदसत्त्वेऽपि न पुनर्बाधः । न च शुद्धचिति चित्त्वोपलक्षितप्रतियोगिकप्रातिभासिकभेदः शङ्क्यः, प्रातिभासिकस्य मूलाज्ञानपरिणामत्वेन मूलाज्ञानस्य चाऽवच्छिन्नचिन्निष्ठतया शुद्धचिति मूलाज्ञानाभावेन तत्परिणामरूपप्रातिभासिकभेदाप्रसक्तेः । न च शुद्धचिन्निष्ठघटादिभेदे चित्त्वोपलक्षितप्रातियोगिकत्वभ्रममादाय बाधः शङ्क्यः, तादृशभ्रमस्य मूलाज्ञानकार्यत्वावश्यकत्वेन तादृशभेदस्य घटप्रतियोगिकस्य शुद्धरूपत्वे शुद्धाभिन्नधर्मरूपत्वे वा मूलाज्ञानाविषयतया तत्र तथा भ्रमासम्भवात् ।

यत्तु ब्रह्मप्रमेत्याद्यनुगतधर्मावच्छिन्नविशेष्यकसंशयस्य तद्व्यक्तित्वेन पक्षतावच्छेदकत्वलेखनमयुक्तं, तादृशसंशयव्यक्तीनां बहुत्वात्, तासां मध्ये कस्याः पक्षतावच्छेदकत्वमित्यत्र विनिगमकासम्भवात , न्यायप्रयोगे तदादिशब्दप्रयोगासाम्प्रदायिकत्वस्य भवद्भिरुक्तत्वाच्चेति ।

तन्न । न्यायप्रयोगकालीनसंशयव्यक्तिविशेषगतपुरःस्फूर्तिकत्वस्य तद्व्यक्तिविशेषस्य पक्षतावच्छेदकतया ग्रहणे विनिगमकसत्त्वात्, अन्यत्र नवीनतार्किकमतरीत्या तदादिशब्दस्य न्यायप्रयोगाविषयत्वोक्तावपि 'तथा चायं, तस्मात्तथा'इत्युपनयनिगमनाङ्गीकर्तृप्राचीनतार्किकमतरीत्या प्रकृते तदादिशब्दस्य न्यायप्र-

योगसंघटनोपपत्तेः ।

एतेन ब्रह्मप्रमेयादिविशेषणत्रयविचारे न्यायभास्करे यद्य-दकाण्डजल्पनं तत्सर्वमपास्तं, अनुक्तोपालम्भनत्वात् ।

इति न्यायभास्करखण्डने चिद्भिन्नत्वसमर्थनम् ।

सदसद्विलक्षणत्वं मिथ्यात्वम् । तच्च सत्यं सत्वं वाच्यमिति-समानाधिकरणनामघटितवाक्यजन्यप्रतीतीयसत्यत्वव्यापकमुख्य-विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकोक्तप्रतीत्यभाव-सत्तादात्म्य-द्वयरूपमिति लघुचन्द्रिकायामुक्तम्, मुख्यविशेष्यता प्रकारता-सांसर्गिकविषयताभिन्ना ग्राह्या, सत्यमित्यादिनामभिरास्मन्मते समानाधिकरणैः निर्विकल्पकबोधजननात् तदीयविषयतायाः, मतान्तरे तज्जन्यसविकल्पीयविशेष्यतायाः ग्रहणम् ।

यत्तु स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्व-सत्ता-दात्म्योभयं सदसद्विलक्षणत्वशब्दार्थ इति लिखित्वा तदुपरि दूषणं लिखितं,

तन्न । दूष्यतया त्वदुद्भावितार्थस्य सिद्धितट्टीकयोः सद-सद्विलक्षणत्वविचारप्रकरणे अनुक्ततयाऽनुक्तोपालम्भनत्वात् ।

यत्तु लघुचन्द्रिकायां सत्तादात्म्यरूपपक्षतावच्छेदकाक्रान्ते शुक्तिरूप्ये माध्वं प्रति न्यायप्रयोगे माध्वैः शुक्तिरूप्येऽसत्त्वा-ङ्गीकारेण बाधः सदसद्विलक्षणत्वसाध्यस्येत्याशङ्क्य माध्वैरनिर्व-चनीयख्यात्यनङ्गीकारेण शुक्तिरूप्यस्य सत्तादात्म्यरूपपक्ष-तावच्छेदकानाक्रान्तत्वात् बाधो नेत्युक्तं, तदयुक्तं, यत्र मतद्वये साध्यविरहः, तत्रैव बाधस्य वक्तव्यत्वात्, सत्तादात्म्यरूपपक्ष-तावच्छेदकावच्छिन्ने सदसद्विलक्षणत्वस्य साधनमनुचितं चेति ।

तन्न । यत्र मतद्वये साध्यविरहः, तत्रैव बाधो वक्तव्य इति

नियमस्य दृष्टान्तभिन्नविषयत्वात्, प्रकृते च शुक्तिरूप्यस्य दृष्टान्तत्वात् । सद्विलक्षणत्वस्य सत्तादात्म्याभावरूपत्वाभावेन सत्तादात्म्यरूपपक्षतावच्छेदकाक्रान्ते सदसद्विलक्षणत्वसाधनस्योचितत्वात् ।

यत्तु माध्वमते शुक्तिरूप्यस्य पक्षतावच्छेदकसत्तादात्म्याक्रान्तत्वेन तत्राऽसद्विलक्षणत्वरूपसत्तादात्म्यसत्त्वात् सदसद्विलक्षणत्वस्य तत्र बाधोक्तिरयुक्तेति,

तन्न । तुच्छभिन्नत्वमसद्विलक्षणत्वमितिपक्षाभिप्रायेण बाधोद्भावनात् । माध्वमते शुक्तिरूप्यस्य तुच्छत्वात् शुक्तिरूप्ये पक्षतावच्छेदकसत्तादात्म्याक्रान्तत्वलेखनस्य स्वमताभिप्रायकत्वात् ।

यत्तु सत्यं सत्यं वाच्यमितिवाक्यजन्यज्ञानीयसत्यत्वव्यापकमुख्यविशेष्यतासम्बन्धावच्छिन्नतज्ज्ञानव्यक्तित्वावच्छिन्नप्रतियोगिताकात्यन्ताभाव-सत्तादात्म्यद्वयं तादृशविषयितासम्बन्धावच्छिन्नतज्ज्ञानव्यक्तिनिष्ठावच्छेदकताकभेदप्रतियोगिताकसत्तादात्म्यद्वयं वा सदसद्विलक्षणत्वम्, व्यापकत्वस्य सम्बन्धमध्ये निवेशात् न तन्निवेशप्रयुक्तगौरवम्, मुख्यविशेष्यतात्वन्तु प्रकारतासांसर्गिकविषयतान्यविषयतात्वं, तच्च विशेष्यताविशेष इव निर्विकल्पकज्ञानीयतुरीयविषयतायामस्तीति परमते आद्यस्य, मन्मते द्वितीयस्य ग्रहणं, मन्मते सत्यादिसमानाधिकरणनामभिः सत्यत्वाद्युपलक्षितशुद्धब्रह्मणोर्निर्विकल्पकधीरेव जायत इति तदीयविषयतालाभः, सर्वपदमहिम्ना विषयतायाः सत्यत्वव्यापकतालाभः, तादृशज्ञाने चाऽस्मदभ्युपगतबाध्यत्वविरोध्यलीकव्यावृत्तसत्यत्वप्रकारकत्वं परैरभ्युपगम्यत इति तदीयमुख्यविशेष्यतासम्बन्धेन तज्ज्ञानाभावसाधने न तैः सिद्धसाधनं वक्तुं शक्यं, विषयतायां सत्यत्वव्यापकत्वनिवेशात् किञ्चित्सत्यनिष्ठविषयतायाः कुत्रचित्सत्ये अभावमादाय न परेषां सिद्धसाधनमिति लेखनमयुक्तं, उक्त-

विषयतायाः जात्यखण्डधर्मभिन्नतया स्वरूपतोऽवच्छेदकत्वासम्भवात्, उक्तविषयतात्वस्य तद्व्यक्तित्वरूपलघुधर्मसमनियतत्वेनाऽवच्छेदकत्वासम्भवात्, तादृशविषयतानिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य निवेशासम्भवादिति ।

तन्न । उक्तविषयतायाः सम्बन्धत्वेन निवेशनात् सम्बन्धस्य च स्वरूपतोऽपि भानाङ्गीकारात् । उक्तविषयतायाः पदार्थविधया निवेशेऽपि नाऽनुपपत्तिः, जात्यखण्डधर्मभिन्नपदार्थानां न स्वरूपतोभानमित्यस्याऽप्रामाणिकत्वात् । लघुचन्द्रिकायां सम्बन्धविधया तादृशविषयतानिवेशस्य चरमोक्ततया तत्पक्ष एव निर्भरावगतेः।

यत्तु विषयतायां सत्यत्वव्यापकत्वनिवेशनमयुक्तं, सत्यत्वस्य मिथ्यात्वाभावरूपत्वेनाऽऽत्माश्रयादिति,

तन्न । प्रकृते सत्यत्वस्याऽबाध्यत्वरूपत्वेन प्रकृतमिथ्यात्वाघटितत्वेनाऽऽत्माश्रयाभावात् ।

यत्तु अद्वैतिमते सत्यं सर्वं वाच्यमितिवाक्यजन्यसप्रकारकधीविशेष्यत्वस्य प्रकारतासांसर्गिकविषयताभिन्नविषयतात्वरूपाक्रान्ततया तादृशविषयतासम्बन्धेन सत्यत्वोपहिते उक्तवाक्यजन्यज्ञानसत्त्वेन तत्र बाध इति ।

तन्न । सत्यादिवाक्यतात्पर्यप्रमाविषयीभूतज्ञानस्य विवक्षितत्वेन तस्य चाऽद्वैतिमते निर्विकल्पकत्वेन शुद्धमात्रनिष्ठत्वात् उपहिते बाधाभावात् ।

सत्यत्ववादिमते सप्रकारकबोधस्याऽद्वैतिमते च निष्प्रकारकबोधस्य तात्पर्यप्रमाविषयत्वात् सत्यत्ववादिमतेऽपि तादृशबोधप्रसिध्या साध्याप्रसिध्द्यापादनं न लगति ।

यत्तु ब्रह्ममात्रविषयकतत्तद्धीविषयत्वस्य ज्ञानानिवर्त्यत्वापेक्षया लघुत्वेऽपि तुच्छसाधारणज्ञानानिवर्त्यत्वसमनैयत्यं नाऽस्ति, एवं

स्थिते तयोः समनैयत्याङ्गीकरणं लघुचन्द्रिकायां विरुद्धमिति ।

तन्न । असत्ख्यातिमते शुक्तिरूप्यस्य तुच्छत्वं स्वीकृतं, शुक्तितत्त्वज्ञानाद्रूप्यमुच्छिन्नमितिप्रत्ययबलेन ज्ञाननिवर्त्यत्वं च स्वीकृतमित्यतो ज्ञाननिवर्त्यत्वस्य ब्रह्ममात्रविषयकतत्तद्धीविषयत्वसमनैयत्यस्यासत्ख्यातिमताभिप्रायेणोक्तेः ।

यत्तूक्तविषयतायाः भावरूपत्वेन तस्याः ब्रह्मावृत्तितया ब्रह्मण्युक्तसाध्यसत्त्वेऽपि यथा सत्यत्वं तथा प्रपञ्चस्याऽपि स्यादिति ।

तन्न । प्रथममिथ्यात्वविचारे लघुचन्द्रिकायां 'भावरूपधर्मानाश्रयत्वेऽपि—' इत्यादिग्रन्थे अपिशब्दस्वारस्येन भावरूपधर्माश्रयत्वपक्षस्याऽपि विवरणाद्युक्तस्याऽभ्युपगमसूचनेन उक्तज्ञानीयविषयतायाः शुद्धे सत्त्वेन तत्रोक्तबाधाभावात् तदाविद्रूक्योक्त्यसङ्गतेः ।

यत्तु मसत्त्ववादिमतेऽपि उक्तज्ञानस्य कादाचित्कतया उक्तविषयतासम्बन्धेन तदभावस्य प्रपञ्चे स्वीकारेण सिद्धसाधनं, किञ्च उक्तविषयतायाः विषयतात्वेन सम्बन्धत्वेऽपि उक्तानुगतरूपेण सम्बन्धत्वमप्रामाणिकं, विषयताया वृत्त्यनियामकतया अभावप्रतियोगितावच्छेदकत्वाभावश्चेति ।

तन्न । त्वन्मते सत्यं सर्वमिति बोधस्येश्वरीयस्य प्रपञ्चे त्वद्रीत्या सर्वदा सत्त्वेन सिद्धसाधनाप्रसक्तेः, विषयतात्ववत् उक्तानुगतरूपस्य सम्बन्धतावच्छेदकत्वे प्रमाणतौल्यात्, वृत्त्यनियामकस्यापि अभावप्रतियोगितावच्छेदकसम्बन्धस्य बहुभिर्बहुस्थलेषु लेखनात् । तस्मात् ब्रह्मानन्दाद्यनुक्तस्वकल्पितासङ्गतपारिष्कारादिघटितं यद्यन्न्यायभास्कारे प्रथममिथ्यात्वविचारे लिखितं तत्सर्वमनुक्तोपालम्भनं द्रष्टव्यम् ।

इति न्यायभास्करखण्डने प्रथममिथ्यात्वसमर्थनं समाप्तम् ।

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वम्, तच्च

येन सम्बन्धेन यद्रूपविशिष्टसम्बन्धितया यत् ज्ञानं, तन्निष्ठतत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नत्रैकालिकात्यन्ताभावप्रतियोगित्वम्। सम्बन्धान्तररूपान्तरावच्छिन्नोक्ताभावप्रतियोगित्वमादाय सिद्धसाधनवारणार्थं तत्सम्बन्धावच्छिन्नत्वतद्रूपावच्छिन्नत्वयोर्निवेशः।

न च निर्विकल्पकधीविषयीभूते सोऽयं ककार इतिवाक्यजन्यप्रमाविषयप्रातिभासिके नाऽयं स इतिज्ञानबाध्ये उक्तसाध्याभाववति दृश्यत्वहेतुमत्त्वात् व्यभिचार इति वाच्यम्। सर्वं सदिति ज्ञाने उक्तप्रातिभासिकस्याऽपि सर्वत्वेन प्रकारत्वेन व्यभिचाराप्रसक्तेः। 'अध्यासो नामाऽतस्मिन् तद्बुद्धिः' इतिभाष्यरीत्या निर्विकल्पकभ्रमासिद्धेश्च। अभावे तन्निष्ठत्वं उक्तसम्बन्धितया ज्ञायमानसर्वनिष्ठत्वं, अन्यथा रजतत्वेन तादात्म्येन रजतसम्बन्धितया ज्ञायमानशुक्तिनिष्ठात्यन्ताभावप्रतियोगित्वस्य व्यावहारिकरजते सत्त्वात्सिद्धसाधनापत्तेः। तन्निवेशे तु रजतसम्बन्धितया ज्ञायमानसर्वान्तर्गतरजतावयवे व्यावहारिकरजताभावस्याऽनुमानात्पूर्वमसिद्धतया सिद्धसाधनाभावः।

यद्विशिष्टसम्बन्धितयेत्यत्र यत्पदं रजतत्वादिपरम्। प्राचीनमते स्वत्वयत्त्वतत्त्वानां अनुगतत्वात्।

सर्वपदस्य व्यापकत्वार्थकतया उक्तसम्बन्धितया ज्ञातत्वव्यापकत्वं लब्धं, तच्च कालिकाव्याप्यवृत्तिमदत्यन्ताभावेऽप्यस्ति, व्यापकत्वस्य तन्निष्ठो यो भेदः तत्प्रतियोगितानवच्छेदकत्वरूपत्वात्। अद्वैतिमते सर्वस्याऽप्यभावस्य सार्वत्रिकत्वेनाऽत्यन्ताभावघटितव्यापकत्वासम्प्रतिपत्तेः। तथा चोक्तज्ञायमानत्वव्यापककालिकाव्याप्यवृत्तिमदत्यन्ताभावप्रतियोगित्वमादायाऽर्थान्तरतापरिहाराय त्रैकालिकत्वमभावे विशेषणम्।

व्यापकत्वघटकभेदे च तन्नुल्लेखिप्रतीतिविषयत्व-

योग्यत्वं विवक्षितम्, अन्यथा उक्तरजतत्वावच्छिन्नसम्बन्धितया ज्ञायमानं रजतत्वावच्छिन्नाभाववदिति समानाधिकरणप्रतीत्या गुणादिकं गुण्यादिना भिन्नाभिन्नमित्युक्तरीत्या तत्र रजतत्वावच्छिन्नाभाववद्भेदसिध्या रजताभावस्योक्तव्यापकत्वासिद्ध्यापत्तेः ।

त्रैकालिकत्वमव्याप्यवृत्तिभिन्नत्वं निषेधपदस्य संसर्गाभावपरत्वे ध्वंसप्रतियोगित्वमादाय सिद्धसाधनवारणार्थम् । त्रैकालिकत्वविशेषणे तु त्रैकालिकपदस्य कालत्वव्यापकत्वमर्थः । मिथ्यात्वघटकाभावस्य पारमार्थिकत्वपक्ष इव तस्य व्यावहारिकत्वेऽपि मुक्तौ कालानभ्युपगमादेव मुक्त्यवृत्तिनो व्यावहारिकस्य कालत्वव्यापकत्व नाऽनुपपन्नम् । न च प्रकृतानुमानेन ध्वंसस्याऽपि त्रैकालिकत्वं सिद्ध्यतिवति वाच्यम् । यस्मिन्नभावे त्रैकालिकत्वं प्रसिद्धं, तद्विशिष्टताद्दशाभावप्रतियोगित्वसाधनसम्भवे यस्मिन् तदप्रसिद्धं तस्मिन् तत् स्वीकृत्य तदभावप्रतियोगित्वसाधनस्याऽगतिकगतित्वात् । न च तर्हि अभावप्रतियोगित्वस्य प्रतियोगिविरोधिसम्बन्धावच्छिन्नत्वनियमेन भेदासहिष्णुतादात्म्यानङ्गीकर्त्रा अद्वैतिना भेदप्रतियोगितायामप्रसिद्धमपि तादात्म्यसम्बन्धावच्छिन्नत्वं स्वीकृत्य ताद्दशभेदप्रतियोगित्वस्य प्रकृतानुमानेन सिद्धिमादाय दोषवारणार्थं निषेधपदस्याऽत्यन्ताभावार्थत्वस्वीकरणमपि न युक्तं स्यादिति वाच्यम् । भेदप्रतियोगित्वं मयाऽपि स्वीकृतं, तस्मिन् विशेषणीभूतं तादात्म्यसम्बन्धावच्छिन्नत्वं पर भवदनुमानेन सिद्ध्यति, न तु विशेष्यांश इत्यतो मन्दफलं त्वदनुमानमिति वदतः प्रतिवादिनो मुखभङ्गार्थं निषेधपदस्याऽत्यन्ताभावार्थत्वस्वीकारात् ।

एतेन तेन सम्बन्धेन तदधिकरणे तत्सम्बन्धावच्छिन्नाभावप्रतियोगित्वस्यैव मिथ्यात्वेन समीहितसिध्या भेदमादाया-

ऽपि तत्सम्भवे असन्ताभावमादायैव मिथ्यात्वमिति निर्बन्धोऽयुक्त इति प्रलापः कस्यचित्पराास्तः । असन्ताभावनिवेशस्य उक्तरीत्या मन्दफलत्वपरिहारार्थत्वात् । ब्रह्मप्रमातिरिक्ताबाध्यं येन सम्बन्धेन येन रूपेण स्वसम्बन्धितया ज्ञायते यत्तादृशज्ञायमानत्वव्यापकत्रैकालिकाभावीयतत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगितावत्, दृश्यत्वात्, शुक्तिरूप्यवदिति सामान्यानुमाने सामानाधिकरण्येन साध्यसिध्युद्देश्यकानुमानं, सत्तादात्म्यविशिष्टचिद्भिन्नं येन सम्बन्धेन येन रूपेण स्वसम्बन्धितया ज्ञायते यत् तादृशज्ञायमानत्वव्यापकत्रैकालिकाभावीयतत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगितावत्, दृश्यत्वात्, शुक्तिरूप्यवदिति सामान्यानुमाने अवच्छेदकावच्छेदेन साध्यसिध्युद्देश्यकानुमानम् । स्वपदं पक्षे साध्योपपादने पक्षपरं, दृष्टान्ते साध्योपपादने दृष्टान्तपरं, प्राचीनमते स्वत्वस्याऽनुगतत्वात् । रजतत्वविशिष्टं तादात्म्यसम्बन्धेन रजतत्वेन रजतसम्बन्धितया यज्ज्ञायते तादृशज्ञायमानत्वव्यापकत्रैकालिकाभावीयतादात्म्यादिसम्बन्धावच्छिन्नप्रतियोगितावत्, दृश्यत्वात्, रजतत्वेन घटो नाऽस्तीतिप्रतीतिविषयरजतत्वतादात्म्यावच्छिन्नप्रतियोगिताश्रयघटवदिति विशेषानुमानम् । एवं पटादिष्वपि विशेषानुमानं योज्यम् । रजताश्रये सर्वत्र शुक्तिरूप्यत्वेन शुक्तिरूप्याभावसिद्धावपि रजतत्वेन शुक्तिरूप्याभावाप्रसिध्या विशेषानुमाने शुक्तिरूप्यं न दृष्टान्तः, किन्तु सामान्यानुमान इति लघुचन्द्रिकाः ।

यत्तु अद्वैतिमते रजतत्वेन घटो नाऽस्तीतिप्रतीतिसिद्धघटाभावप्रतियोगितायाः सम्बन्धावच्छिन्नत्वं न सिध्यति, तन्मते रजतत्वविशिष्टघटवानिति ज्ञानस्य प्रतिभासिकरजतत्वविशिष्टविष-

यकत्वेन तद्विरोधिनो ज्ञानस्य रजतत्वेन घटो नाऽस्तीत्याकारकस्य प्रातिभासिकाभावविषयकत्वेन तदीयप्रतियोगिताया व्यधिक-रणधर्मानवच्छिन्नत्वात्, व्यधिकरणधर्मावच्छिन्नप्रतियोगितायाः समानाधिकरणधर्मावच्छिन्नप्रतियोगितावत् सम्बन्धावच्छिन्नत्वस्य शिरोमणिगदाधरादिभिः स्वीकृतत्वेऽपि प्रकृते विशेषानुमाने-घटादेस्तादात्म्यसम्बन्धावच्छिन्नरजतत्वरूपव्यधिकरणधर्मावच्छि-न्नप्रतियोगिताश्रयत्वाभावेन दृष्टान्तासिद्धिरिति ।

तन्न, धर्मे प्रतियोगिताव्यधिकरणत्वं प्रतियोगिताश्रयन्यू-नसत्ताकत्वम् । अद्वैतिमते रजतत्वविशिष्टघटवानिति बुद्धौ घटो व्यावहारिक एव भासते, तस्योक्तप्रतीतिपूर्वोत्तरकालवृत्तित्वात्, तत्र रजतत्वं परं प्रातिभासिकं, पटे तस्य तत्प्रतीतिपूर्वोत्तरक्षण-योरसत्त्वात्, तत्प्रतियोगितायाः व्यधिकरणधर्मावच्छिन्नतया स-म्बन्धावच्छिन्नत्वात् साध्यस्य दृष्टान्ते निष्प्रत्यूहत्वात् ।

यत्तु विशेषानुमाने रजतत्वेन रजतघटोभयाभावमादाय र-जतादौ सिद्धसाधनवारणाय रजतत्वपर्याप्तावच्छेदकताकत्वस्य प्रतियोगितायां निवेशनीयतया रजतत्वेन घटाभावप्रतियोगिता-व्यावर्तनसम्भवः, तादृशप्रतियोगिताया रजतत्वघटत्वोभयावच्छिन्न-त्वेन तादृशप्रकारतावच्छेदकीभूतरजतत्वपर्याप्तावच्छेदकताकत्वा-भावात्, एवं च दृष्टान्ते साध्यवैकल्यं दुर्वारमिति ।

तन्न, पूर्वक्षणवृत्तित्वविशिष्टरजतं नाऽस्तीतिप्रतीतिसिद्धा-भावमादाय सिद्धसाधनवारणार्थं प्रतियोगितायां वैशिष्ट्यान-वच्छिन्नत्वस्येव उक्तोभयाभाववारणाय व्यासज्यवृत्तिधर्मानव-च्छिन्नत्वस्यैव निवेशात् पर्याप्त्यादेरनिवेशात् ।

यत्तु रजतस्य सत्तामभ्युपगम्य तदाश्रयत्वेन प्रतीयमा-ने तदवयवे रजतत्वावच्छिन्नाभावानभ्युपगमेऽपि उक्तानुमानव-

लेनैव रजतत्वावच्छिन्नघटादिनिष्ठप्रतियोगित्वस्य रजते सिध्याप्रस्या अर्थान्तरं दुर्वारमिति ।

तन्न । व्यधिकरणधर्मावच्छिन्नप्रतियोगितास्वव्यापकं तादृशप्रतियोगिताच्छेदकानाश्रयवृत्तित्वमितिनियमभङ्गप्रसङ्गेन रजते तादृशप्रतियोगित्वसाधनासम्भवात् ।

यत्तु रजतत्वविशिष्टं येन रूपेण येन सम्बन्धेन रजतसम्बन्धितया ज्ञायते यत् तादृशज्ञायमानत्वव्यापकाभावीयतत्सम्बन्धावच्छिन्नतद्रूपसमानाधिकरणपारमार्थिकत्वावच्छिन्नप्रतियोगित्वं साध्यं, पारमार्थिकत्वेन शुक्तिरूप्याभावप्रतियोगि शुक्तिरूप्यं दृष्टान्तः, पारमार्थिकत्वेन शुक्तिरूप्याभावप्रतियोगित्वस्य शुक्तिरूप्यगतस्य घटादौ सिद्धिमादायाऽर्थान्तरवारणाय प्रतियोगितायां तद्रूपसामानाधिकरण्यनिवेश इति लघुचन्द्रिकोक्तमयुक्तं, पारमार्थिकत्वावच्छिन्नशुक्तिरूप्यनिष्ठाभावप्रतियोगित्वस्य गगने सरोजारविन्दस्येव सिध्यसम्भवादिति ।

तन्न । गगने सरोजारविन्दभ्रमवत् पारमार्थिकत्वावच्छिन्नशुक्तिरूप्याभावप्रतियोगित्वस्य भ्रमात्मकसिद्धिर्घटे भवेत, सा माभूत, तत्सिद्धावभिमतासिद्धेः, किन्तु प्रमात्मिका सिद्धिर्विवक्षितेत्येतदर्थं तद्रूपसामानाधिकरण्यनिवेशात् । तद्रूपसामानाधिकरण्यं प्रतियोगित्वस्य प्रमीयत्वं सूचयति ।

अत्राऽऽह विठ्ठलमिश्रः 'पारमार्थिकत्वेन शुक्तिरूप्याभावप्रतियोगित्वस्य घटादौ सिद्धिमादाय यदर्थान्तरं, तद्वारणादेः प्रयोजनस्य तद्रूपसामानाधिकरण्यनिवेशे सत्वात्—'इतिलघुचन्द्रिकाव्याख्यानप्रकरणे 'घटस्य घटत्ववत्वेऽपि कपालादौ घटत्वेन घटपटोभयाभाववत् पारमार्थिकत्वेऽपि पारमार्थिकत्वेन घटशुक्तिरूप्योभयाभावस्य व्यासज्यवृत्तिप्रतियोगिताकस्य केवलान्वयिनः

सत्त्वोपपत्त्याऽर्थान्तरस्य दुर्वारत्वात् तद्रूपसामानाधिकरण्यनिवेशः' इति ।

तन्मन्दम् । तथासति पारमार्थिकत्वेन घटपटोभयाभावस्य घटाधिकरणकपालादौ सत्त्वेन तादृशाभावमादायार्थान्तरमनुक्त्वा पारमार्थिकत्वेन सत्त्वासत्त्वानिर्वाच्यत्वादिभिर्मतभेदेन कथितशुक्तिरूप्याभावलेखनस्याऽयुक्तत्वापत्तेरुभयाभावमादायोक्तग्रन्थव्याख्यानस्याऽयुक्तत्वात् ।

एतेन ब्रह्मप्रमातिरिक्ताबाध्यत्वविशिष्टसत्त्वप्रकारकप्रतीतिविषयताविशिष्टचिद्भिन्नत्वसमानाधिकरणरूपं तत्सम्बन्धेन स्वविशिष्टत्वेन ज्ञायमानसकलनिष्ठत्रैकालिकसंसर्गाभावीयतत्सम्बन्धावच्छिन्नस्वावच्छिन्नप्रतियोगितासमानाधिकरणं, तादृशचिद्भिन्नत्वं वा तादृशप्रतियोगितावच्छेदकं, दृश्यवृत्तित्वादिति सामान्यानुमानमिति विठ्ठलमिश्रीयग्रन्थः परास्तः ।

'ब्रह्मप्रमातिरिक्ताबाध्यत्वं तन्मात्रं पक्षतावच्छेदकमिति यावत्'इतिलघुचन्द्रिकाग्रन्थेन सत्त्वेन प्रतीत्यर्हत्वचिद्भिन्नत्वविशेषणाभ्यां साकं ब्रह्मप्रमातिरिक्ताबाध्यत्वस्य मेलनासम्भवस्योक्तेस्तथैवाऽद्वैतसिद्धिगुरुचन्द्रिकयोरप्युक्तेर्विठ्ठलमिश्रोक्तविशेषणत्रयमेलनस्य उक्तलघुचन्द्रिकादिग्रन्थविरुद्धत्वात् । अत एव विठ्ठलमिश्रीयग्रन्थानेव प्रायेण चौर्येण न्यायभास्करे लिखित्वा तदुपरि दूषणाभासलेखनं यत् तत्परिहारे नाऽस्माकं प्रवृत्तिः, विठ्ठलमिश्रग्रन्थस्य बहुस्थलेषु गौडपादादिगौडब्रह्मानन्दान्ताद्वैतशास्त्रप्रवर्तकाचार्यग्रन्थविरुद्धत्वात् । ननु 'ब्रह्मप्रमातिरिक्ताबाध्यत्वं तन्मात्रं पक्षतावच्छेदकमिति यावत्'इत्यादिलघुचन्द्रिकादिग्रन्थस्य सामानाधिकरण्येनाऽनुमितौ ब्रह्मप्रमातिरिक्तत्वमात्र सिद्धसाधनवारकं विशेषणमित्येतत्परत्वमेव, न तु अवच्छेदकावच्छे-

देनाऽनुमितौ उक्तविशेषणं नास्तीत्येतत्परत्वमपि, अतो विठ्ठलमिश्रीये अवच्छेदकावच्छेदेनाऽनुमितौ उक्तविशेषणत्रयमेलनलेखनं न विरुद्धमिति चेन्न । अवच्छेदकावच्छेदेनाऽनुमितौ सामानाधिकरण्येन सिद्धसाधनस्याऽदोषतया तद्वारकब्रह्मप्रमातिरिक्ताबाध्यत्वस्य तत्राऽनिवेश्यत्वात्, समानाधिकरण्येनानुमितौ ब्रह्मतुच्छयोः सामानाधिकरण्येन बाधस्याऽदोषतया तद्वारकचिद्भिन्नत्वसत्तादात्म्ययोरवच्छेदकावच्छेदेनाऽनुमितावेव निवेश्यत्वेन सामानाधिकरण्यानुमितावनिवेश्यत्वात् त्रयाणां मेलनं न सम्भवतीत्येव लघुचन्द्रिकादितात्पर्यावगतेः मेलनलेखकविठ्ठलमिश्रीयोपरि मूलविरोध इतिदोषस्फुरणाभावेन तदनुक्त्वा दोषान्तराभिधानस्य न्यायभास्करीयस्याऽसन्तामङ्गतत्वात् ।

उक्तमिथ्यात्वे अन्योन्याश्रयादिदोषपरिहाराय पारमार्थिकत्वेनाऽभावनिवेशकल्पे ज्ञानानिवर्त्यमात्रविशेष्यकत्वं पारमार्थिकत्वं,विषयतासम्बन्धेन उक्तधीत्वव्यापकावच्छेदकताकाभावप्रतियोगित्वं प्रपञ्चे, उक्तपारमार्थिकत्वस्य ब्रह्मण्येवाऽद्वैतिमते विषयतासम्बन्धेन सत्त्वात् तादृशपारमार्थिकत्वस्य प्रकृतमिथ्यात्वाघटितत्वेनाऽन्योन्याश्रयाद्यप्रसक्तिः, तादृशधियः तद्व्यक्तित्वरूपलघुधर्मसमनियततादृशधीत्वेन निवेशे गौरवात् तद्व्यक्तित्वविशिष्टत्वेन निवेशस्य नवीनमतरीत्या तदादिशब्दघटितन्यायप्रयोगासम्भवेनाऽयुक्तत्वात् तादृशधियः स्वरूपत एवाऽवच्छेदकत्वं, घटादौ तादृशधीस्वीकारेऽपि पूर्वक्षणवृत्तित्वविशिष्टतादृशधियाऽभावमादाय सिद्धसाधनवारणार्थं तादृशधीनिष्ठावच्छेदकताऽनवच्छिन्ना विवक्षिता । न चाऽवच्छेदकानुगमकरूपाभावे भिन्नभिन्नावच्छेदकव्यक्तीनां न स्वरूपतोऽवच्छेदकत्वमिति शङ्क्यम् । जात्यतिरिक्तस्य स्वरूपतोऽवच्छेदकत्वमते अनुगमकरूपं विना-

ऽप्यवच्छेदकत्वसम्भवात् । न च घटगतोक्तधीरूपपारमार्थिकत्वेन पटाभावं पटगतोक्तधीरूपपारमार्थिकत्वेन घटाभावं चालिनीन्यायेन स्वीकृत्य घटगतपारमार्थिकत्वतदन्यगतपारमार्थिकत्वाभ्यां प्रपञ्चाभावं स्वीकृत्य सत्यत्ववादिना सिद्धसाधनमुद्भावयितुं शक्यते, तादृशाभावावच्छेदकताया: घटगतत्वपटगतत्वरूपधर्मावच्छिन्नतयाऽनवच्छिन्नत्वाभावात् । उक्तधियः ज्ञाननिवर्त्याविषयकत्वमेव ज्ञाननिवर्त्यमात्राविशेष्यकत्वं, तच्चाद्वैतिमते निर्विकल्पकज्ञानस्यैव, उपहितस्याऽपि ज्ञाननिवर्त्यतया तदविषयकनिर्विकल्पकधीविषयत्वाभावेन मिथ्यात्वोपपत्तिः । वृत्तिज्ञानं च न स्वविषयकं, साक्षिमात्रभास्यत्वात्, अतो न ज्ञाननिवर्त्याविषयकज्ञानाप्रसिद्धिः । पारमार्थिकत्वात्मकोक्तधियः विषयतासम्बन्धेन पारमार्थिकत्वेऽप्यसत्वेन तदवच्छिन्नाभावप्रतियोगित्वरूपसाध्यसत्त्वं निष्प्रत्यूहम् । यदि च वृत्तिज्ञानस्य स्वविषयकत्वं स्वीक्रियते, तदा स्वविषयकत्व—स्वभिन्नत्वोभयसम्बन्धेन ज्ञाननिवर्त्याभाववद्धीः पारमार्थिकत्वम् । स्वं—ज्ञाननिवर्त्यं घटादि । उक्तधीत्वं सर्वपारमार्थिकत्वरूपधियामनुगतं रूपं, तदुपलक्षितनिष्ठनिरवच्छिन्नावच्छेदकताकत्वं प्रतियोगितायां निवेश्यते, एकपारमार्थिकत्वरूपधियः स्वस्मिन् विषयतासम्बन्धेन सत्वेऽपि उक्तानुगतधीत्वोपलक्षितपारमार्थिकत्वरूपध्यन्तरस्य स्वस्मिन्विषयतासम्बन्धेनाऽभावमादाय साध्यसिद्धिः, एकस्या धियः अन्यया धिया तस्या अप्यन्ययेत्यनवस्थाऽपि न भवति, पारमार्थिकत्वाधियां निरुक्तधीत्वेनाऽनुगमात् ।

एतेन 'तथा च तादृशधीत्वसमानाधिकरण—' इत्यादि: 'अनुमितिविषयानवस्थाया दुर्वारत्वात्—' इत्यन्तो न्यायभास्करग्रन्थः परास्तः ।

अनुक्तोपालम्भनत्वात् । तद्ग्रन्थोक्ताधेयत्वसम्बन्धघटितानुगमद्वयस्याऽसङ्गतार्थत्वेनाऽशुद्धत्वात, उपहितब्रह्मणो मिथ्यात्वेन तत्र मिथ्यात्वबाधोक्तेरसङ्गतत्वाच्च, सविकल्पकाधियां पारमार्थिकत्वानभ्युपगमाच्चाऽद्वैतिभिः ।

अथ वा ज्ञाननिवर्त्यभिन्नत्वरूपज्ञानानिवर्त्यत्वं पारमार्थिकत्वं विवक्ष्यते, तच्चाऽभावीयविशेषणतासम्बन्धेन शुद्धब्रह्ममात्रवृत्तिः, अभावीयविशेषणतासम्बन्धेन स्वभिन्नवृत्ति च । विशेषणतासम्बन्धावच्छिन्नज्ञाननिवर्त्यभिन्नत्वनिष्ठावच्छेदकताकाभावप्रतियोगित्वं च साध्यम्, ज्ञाननिवर्त्यभिन्नत्वघटकभेदः नञुल्लेखिप्रतीतियोग्यो विवक्षितः, तेन ज्ञाननिवर्त्यः प्रपञ्च इति समानाधिकरणप्रतीतिसिद्धाभेदसमानाधिकरणभेदमादाय न प्रपञ्चस्य ज्ञाननिवर्त्यभिन्नत्वप्रसक्तिः । पारमार्थिकत्वावच्छिन्नप्रतियोगितायां पारमार्थिकत्वेतरव्यधिकरणधर्मानवच्छिन्नत्वं निवेशनीयम् । अन्यथा पारमार्थिकत्वघटत्वाभ्यां पटाभावमादाय सिद्धसाधनापत्तेः ।

एवं व्यावहारिकपारमार्थिकान्यतरनिष्ठं यत्प्रातिभासिकाभावप्रतियोगित्वं, यच्च पारमार्थिकानिष्ठं व्यावहारिकाभावप्रतियोगित्वं, तदन्यत यत् स्वसमानाधिकरणाभावप्रतियोगित्वं, तदेव मिथ्यात्वम् । न च पारमार्थिकब्रह्मणि प्रातिभासिकाभावप्रतियोगित्वमादाय मिथ्यात्वापत्तिवारणाय प्रातिभासिकाभावप्रतियोगिताभिन्नत्वस्य स्वसमानाधिकरणाभावप्रतियोगित्वे निवेशावश्यकत्वेऽपि प्रातिभासिकाभावप्रतियोगित्वे व्यावहारिकपारमार्थिकान्यतरानिष्ठत्वं व्यर्थमिति शङ्क्यम् । स्वाप्निकगजादौ प्रातिभासिके प्रातिभासिकगजाभावमादाय मिथ्यात्वसिध्यर्थत्वात् । न हि स्वप्ने व्यावहारिकगजाभावो गृह्यते, येन तमादाय तत्र मिथ्यात्वनिश्चयः स्यात, व्यावहारिकग्राहकेन्द्रियादीनामु-

परतत्वात् । न च स्वाप्निकगजगतप्रातिभासिकाभावप्रतियोगित्वं प्रातिभासिकाभावप्रतियोगिताभिन्नमिति स्वप्ने नियमेन प्रतीतिरुत्पद्यते, येन स्वाप्निकगतप्रातिभासिकाभावप्रतियोगितया तादृशप्रतियोगिताभिन्नत्वसिध्या मिथ्यात्वनिश्चय उपपद्येत । निष्ठान्तनिवेशे तु व्यावहारिकपारमार्थिकनिष्ठत्वविशेषितप्रातिभासिकाभावप्रतियोगित्वाभिन्नत्वस्य स्वाप्निकप्रातिभासिकाभावप्रतियोगित्वे सत्वेन मिथ्यात्वनिश्चयः, हेतोस्तत्र व्यभिचारपरिहारश्च सिध्यति । न च व्यावहारिकपारमार्थिकान्यतरनिष्ठत्वविशिष्टप्रातिभासिकाभावप्रतियोगिताभेदस्य व्यावहारिकस्य ग्राहकेन्द्रियाणां स्वप्न उपरतत्वात् तद्भेदप्रत्यक्षाभावे तद्भेदघटितमिथ्यात्वस्य स्वप्ने व्यवहारानुपपत्तिरिति वाच्यम् । तद्भेदस्य उक्तमिथ्यात्वव्यवहारे स्वरूपसत एव घटकतया निवेशात् । न च स्वप्नगजाद्यभावस्य प्रातिभासिकत्वे जागरे स्वप्नगजादेर्मिथ्यात्वव्यवहारानुपपत्तिः, तयोरिन्द्रियाग्राह्यत्वात्, तस्य जाग्रति व्यावहारिकाभावस्वीकारे तस्याऽभावद्वयस्वीकार इति गौरवमिति वाच्यम् । गजादेः स्वाप्निकस्य स्वाप्निकाभावस्य जागरे इदानीं स्वाप्नगजो नाऽस्तीतिप्रत्ययविषयस्याऽतीन्द्रियपिशाचाभावस्येवाऽतीन्द्रियप्रातिभासिकप्रतियोगकत्वेन चाक्षुषत्वाभावात् साक्षिवेद्यत्वावश्यकतया साक्षिणश्च स्वाप्निकगजतदभावविषयकत्वसम्भवेन साक्षिप्रत्यक्षमादाय स्वाप्निकगजादेर्जागरे प्रातिभासिकाभावघटितमिथ्यात्वव्यवहारस्य तादृशव्यवहारविषयमिथ्यात्वे साक्षिप्रमाविषयत्वेन भ्रमाविषयत्वस्य च सिद्धेः । साक्षिणः प्रत्यक्षत्वात् वर्तमानमात्रविषयत्वे तु इदानीं स्वप्नगजो नाऽस्तीति प्रत्ययस्य स्मृतित्वमादाय मिथ्यात्वव्यवहारोपपादनमत्रगन्तव्यम् । किञ्च स्वाप्निकग-

जादेर्गौरवमपि सोढ्वा स्वप्ने प्रातिभासिकाभावः, जाग्रति व्यावहारिकाभावश्च स्वीक्रियते, व्यावहारिकाभावस्य गजत्वावच्छिन्नप्रतियोगिताकाभावत्वेन क्लृप्तत्वात्, तद्यतिरिक्तप्रातिभासिकाभावो न स्वीकार्य इत्युक्तावपि यस्य जातिविशेषस्य जाग्रत्काले न प्रत्यक्ष, किन्तु स्वप्न एव नानाव्यक्तिषु प्रत्यक्षं, तदवच्छिन्नाभावस्य व्यवहारिकत्वेनाऽक्लृप्तत्वात् व्यावहारिकतत्कल्पने तत्र गौरवं दुष्परिहरमतस्तादृशस्थले प्रातिभासिकाभावघटितमेव मिथ्यात्वम् । न च तादृशजात्यवच्छिन्नाभावस्याऽक्लृप्तत्वेऽपि द्रव्यत्वेन वा सत्त्वेन वा तदभावस्य क्लृप्ततया तद्धटितमिथ्यात्वनिर्वाहस्तत्राऽपीति शङ्क्यम् । शुक्तिरूप्यत्वेन मिथ्येतिव्यवहारवत् तादृशजात्यवच्छिन्नं तादृशजातिमत्वेन मिथ्येतिव्यवहारसिद्ध्यर्थं तादृशजातिविशेषावच्छिन्नप्रतियोगिताकाभावस्य स्वीकारावश्यकत्वात् । पारमार्थिकनिष्ठव्यावहारिकाभावप्रतियोगित्वघटकपारमार्थिकं पारमार्थिकत्वेन ज्ञायमानं विवक्षितम् । तेन स्वतः पारमार्थिकस्य व्यावहारिकाभावप्रतियोगित्वाभावेऽपि न क्षतिः । घटे पारमार्थिकत्वबुद्धिदशायां स्वसमानाधिकरणव्यावहारिकाभावप्रतियोगित्वज्ञानेऽपि मिथ्यात्वाव्यवहारात् भेदप्रतियोगिव्यावहारिकाभावप्रतियोगित्वे पारमार्थिकनिष्ठत्वविशेषणम् । न च साध्यनिर्वचनरूपोक्तमिथ्यात्वे व्यावहारिकलक्षणस्य यत्प्रयोजनं तदर्थकविशेषणदानमयुक्तमिति शङ्क्यम् । तस्य साध्यनिर्वचनरूपत्वव्यावहारिकलक्षणत्वोभयरूपत्वसम्भवे तत्त्यागायोगात् । अत्र प्रतियोगिता पदार्थान्तरं, न प्रतियोगिरूपा, प्रतियोगितावच्छेदकरूपा वा, तथात्वे घटादिनिष्ठव्यावहारिकाभावप्रतियोगित्वे तन्निष्ठप्रातिभासिकाभावप्रतियोगित्वभे-

दासम्भवेन व्यावहारिकपारमार्थिकान्यतरनिष्ठं यत्प्रातिभासिकाभावप्रतियोगित्वं तद्भिन्नत्वस्याऽसाङ्गत्यापातात्, व्यावहारिकप्रातिभासिकाभावप्रतियोगितावच्छेदकरजतत्वस्य एकत्वेन व्यावहारिकरजतस्य यद्व्यावहारिकाभावप्रतियोगित्वं तस्मिन् प्रातिभासिकाभावप्रतियोगित्वरूपरजतत्वभिन्नत्वाभावेन तदादाय मिथ्यात्वव्यवहारासिद्ध्यनापत्तेश्च । न च भेदस्याऽव्याप्यवृत्तित्वात्तस्मिन् तद्भेदः, सिद्धान्ते तस्याऽव्याप्यवृत्तित्वानभ्युपगमात् ।

किं च प्रातिभासिकनिष्ठं यत्स्वसमानाधिकरणाभावप्रतियोगित्वं, विनाशिनिष्ठं यदप्रातिभासिकस्वसमानाधिकरणाभावप्रतियोगित्वं तदन्यतरत्वं निष्कृष्टं साध्यम् ।

यत्तु सत्यत्ववादिभिः स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वस्य घटादावस्वीकृतत्वात् तन्मात्रसाधनेनैव तन्मुखभङ्गसम्भवे विनाशिनिष्ठत्वं न निवेश्यमिति,

तन्न, 'अतोऽन्यदार्तम्—'इति श्रुत्या घटादौ विनाशित्वस्य, 'नेह नानाऽस्ति किञ्चन—'इति श्रुत्या स्वसमानाधिकरणाभावप्रतियोगित्वस्य च सिद्ध्या तादृशश्रुतिद्वयस्य कुत्सितार्थं वदतो भङ्गार्थं श्रुतिद्वयार्थक्रोडीकारेणोक्तमिथ्यात्वनिष्कर्षणात् । निषेधस्य निषेधमात्रं न प्रतियोगिनोऽधिकसत्ताग्राहकं, किन्तु निषेधस्य न्यूनसत्ताग्राहकं प्रमाणम्—'इतिलघुचन्द्रिकायां निगमनात् यः स्वनिषेधन्यूनसत्ताग्राहकप्रमाणकः स स्वनिषेधापेक्षयाऽधिकसत्ताक इति व्याप्तिः, न तु यः स्वनिषेधनिषेधकप्रमाणकः स स्वनिषेधापेक्षयाऽधिकसत्ताक इत्यर्थस्य लाभः, रजते नेदं रजतमितिज्ञानानन्तरं इदं नाऽरजतमितिप्रमास्थले यत् रजतत्वनिषेधस्य न्यूनसत्ताग्राहकेदं रजतमितिप्रमाणकं, तद्रजतत्वं रजतत्वाभावरूपनेदं रजतमितिभ्रमापादितप्रातिभासिकनिषे-

धापेक्षयाऽधिकसत्ताकं इष्टम्, घटादिः न स्वनिषेधन्यूनसत्ताग्राहकप्रमाणक इत्यतो न स्वनिषेधापेक्षयाऽधिकसत्ताकः, घटतन्निषेधोभयोरपि 'नेह नाना–'इति श्रुतिप्रमितनिषेधकत्वात्, निषेधनिषेधे निषेधापेक्षया प्रतियोगिनोऽधिकसत्तास्वीकारे प्राचीनमते ध्वंसप्रागभावयोरधिकरणेऽत्यन्ताभावास्वीकारात् घटध्वंसाधिकरणकपाले 'घटवत् घटाभाववत्'इतिभ्रमसिद्धघट–तदत्यन्ताभावयोः नाऽत्र घटतदभावाविति प्रमया बाधितयोर्मध्ये घटाभावापेक्षया घटस्याऽधिकसत्तापत्तेः ।

यत्तु मिथ्यात्वघटकाभावस्य पारमार्थिकत्वपक्षे अद्वैतहानिपरिहारार्थं तस्य ब्रह्मरूपत्वस्वीकारे अभावत्वविशिष्टरूपस्य शुद्धब्रह्मरूपत्वासम्भवात् केवलरूपेण तस्य ब्रह्मस्वरूपत्वेऽपि तस्य प्रतियोग्यविरोधितया प्रतियोगिपारमार्थिकत्वाविरोधितेति,

तन्न, अभावत्वविशिष्टरूपस्य प्रतियोगिपारमार्थिकत्वविरोधितया तत्तादात्म्योपलक्षितरूपस्याऽपि काकोपलक्षितस्य तोरणस्य काकस्येव गृहव्यावर्त्तकत्ववत् प्रतियोगिविरोधित्वोपपत्तेः ।

त्रिविधं रजतत्वं सिद्धान्ते–प्रातीतिकमात्रवृत्ति, व्यावहारिकमात्रवृत्ति,तदुभयवृत्ति च। शुक्ताविदं रजतमिति भ्रमात् रजतप्रमास्थल इव रजतार्थिप्रवृत्तिदर्शनात् यद्रजतत्वप्रकारकज्ञानस्य प्रमास्थले प्रवर्तकत्वं तद्रजतत्वप्रकारकज्ञानत्वस्यैव प्रवर्तकतावच्छेदकस्य भ्रमे सत्त्वावश्यकतया साधारणरजतत्वं स्वीकार्यमन्यन्मते साधारणरजतत्वं न स्वीक्रियते, सदिदं रजतमितिभ्रमस्थले सदिति व्यावहारिकसत्यरजततादात्म्यं प्रातीतिकरजते भासते, प्रमास्थलेऽपि सत्यरजततादात्म्यज्ञानत्वेन प्रवर्तकत्वेन भ्रमस्थलेऽपि सत्यरजततादात्म्यज्ञानत्वस्य प्रवर्तकतावच्छेदकस्य निर्वाहार्थं तत्तादात्म्यं भासते इति स्वीक्रियते, अतः पुरोवर्तितादात्म्येनैव प्रातिभा-

सिकं प्रतीयते इति निर्बन्धनमसङ्गतमिति स्थितिः, तन्मतमवलम्ब्य विवरणे 'आपणस्थरूप्यतादात्म्येन प्रतीतं प्रातिभासिकं रूप्यं निषेधप्रतियोगि, न स्वरूपेण' इत्युक्तम् । न च व्यावहारिकस्य इन्द्रियासन्निकृष्टत्वात् प्रात्यक्षिकभ्रमे भानासम्भवः शङ्क्यः, तदंशे स्मृतिरूपत्वात् । न च प्रातीतिकस्याऽज्ञानाविषयत्वात् व्यावहारिकरजततादात्म्यारोपाधिष्ठानत्वमयुक्तमिति शङ्क्यम्, 'अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्च—' इतिभाष्यस्वारस्येन प्रातिभासिकावच्छेदेनाऽपि सत्यतादात्म्यारोपसम्भवात् अज्ञानविषयत्वाज्ञानपरिणामावच्छिन्नत्वान्यतरस्यैवाऽऽरोपाधिष्ठानत्वप्रयोजकत्वात् । न च सदिदं रजमिति भ्रमे व्यावहारिकतादात्म्यस्य स्मृतिस्वीकारे हट्टस्थरजतस्य स्मरणेनोपपत्तौ अनिर्वचनीयसिद्धिर्न भवतीति वाच्यम् । भ्रमस्थले रजतमत्र साक्षात्करोमीत्यनुव्यवसायनिर्वाहार्थं प्रत्यक्षविषयरजतस्वीकारस्याऽऽवश्यकत्वात् ।

यत्तु 'नेह नानाऽस्ति किञ्चन—' इति श्रुतौ 'यस्मिन् पञ्च पञ्च जनाः—' इतिपूर्ववाक्योपस्थापितं प्रपञ्चाविशिष्टं ब्रह्म 'इह—' इतिसर्वनामपदार्थः, निरूपितत्वं सप्तम्यर्थः, ब्रह्मभिन्नं 'नाना' पदार्थः 'किञ्चन' पदार्थवस्त्वन्वयि, 'किञ्चन' पदार्थस्य प्रतियोगितया नञर्थाभावेऽन्वयः, 'अस' धात्वर्थः आधेयता, आश्रयत्वमाख्यातार्थः । तथा च ब्रह्मभिन्नवस्तुसामान्याभावो द्वैतकालावच्छिन्नद्वैतवद्ब्रह्मनिरूपिताधेयताश्रय इति बोधः । लटः प्रकृतशब्दप्रयोगाधिकरणकालरूपवर्तमानकालार्थकतया उक्तवाक्याधिकरणकालस्य च द्वैताधिकरणकालरूपतया तदवच्छिन्नत्वस्याऽसधात्वर्थाधेयतायां भानसम्भवात । अथ वा 'इह' इतिपदस्य द्वैतवद्ब्रह्मपरतया तादृशब्रह्मण एवोद्देश्यत्वेन उद्देश्यतावच्छेदकद्वैतकालावच्छिन्नत्व-

स्य द्वैताभावान्वितमन्यर्थाधेयताह्रपविधेये मानसम्भवात् मिथ्यात्वघटकस्याऽभावस्य प्रतियोग्यवच्छेदककालदेशाद्यवच्छिन्नत्वभाननिर्वाहः । निरवच्छिन्नविशेषणताघटितं मिथ्यात्वमिति पक्षे निरवच्छिन्नविशेषणताघटिताधेयत्वमसधात्वर्थः, प्रपञ्चाभावेऽन्यूनसत्ताकत्वं तु दृश्यत्वाति दृश्याभावोऽप्रातिभासिकः, श्रुतिप्रमितत्वात्, यागादिवदित्यनुमानसिद्धमित्युक्तमयुक्तं, नञ्घटितवाक्ये यस्मिन् यत्प्रकारतया भासते तद्घटितवाक्ये तस्मिन् तदभावः प्रतीयत इति न्यायेन प्रपञ्चे ब्रह्मवृत्तित्वाभावस्यैव उक्तवाक्येन बोधनात् तदभावे ब्रह्मवृत्तित्वबोधासम्भवात् । भूतले नाऽस्ति घट इत्यादावपि तथैव बोध इति,

तन्न, भूतले घटो नाऽस्ति, भूतले घटाभाव इति वाक्ययोः समानविषयबोधजनकत्वस्य सर्वानुभवसिद्धत्वेन त्वदुक्तन्यायस्याऽसार्वत्रिकत्वात् । न च भूतले घटो नाऽस्तीत्यादौ अभावस्य भूतलास्तित्वविशेष्यत्वे तादृशाभावस्यैकत्वेन घटौ न स्त इत्यादिद्विवचनानुपपत्तिरिति शङ्क्यम्,'घटो नाऽस्ति,' 'घटौ न स्तः'इत्यादौ आख्यातार्थप्रतियोगिकाभावस्य घटविशेषणत्वे आख्यातपदस्य घटादिपदसमानवचनकत्वसिद्ध्यर्थं स्वार्थप्रतियोगिकाभावं प्रति विशेष्यस्य बोधकं यत्पदं तत्समानवचनकत्वस्वीकारवत् नञर्थाभावस्य मुख्यविशेष्यत्वेऽपि स्वार्थं प्रति विशेष्यभूताभावप्रतियोगिबोधकपदसमानवचनकत्वस्याऽऽख्याते स्वीकारेणोपपत्तेः ।

यत्तूक्तश्रुतिजन्यबोधमुख्यविशेष्याभावस्य सम्बन्धान्तरावच्छिन्नप्रतियोगिताकत्वसम्भवेन नोक्तश्रुत्या मिथ्यात्वसिद्धिरिति,

तन्न,भूतले घटो नाऽस्तीति वाक्यात् घटभूतलयोर्यः सम्बन्धः प्रसिद्धः संयोगः, तत्सम्बन्धावच्छिन्नाभावबोधस्य स्वारसिकतया तत्र नञः तत्सम्बन्धावच्छिन्नाभावे निरूढलक्षणावत् प्रकृतेऽपि

प्रपञ्चब्रह्मणोः प्रसिद्धो यः सम्बन्धः तदवच्छिन्नाभावस्यैव नञर्थतया तस्यैवोक्तश्रुतिवाक्यजन्यबोधविषयत्वात् ।

यत्तु द्वैतविशिष्टब्रह्मनिरूपितत्वरूपसुबन्तार्थोद्देशेन तिङन्तासघात्वर्थाधेयत्वस्य विधानोक्तिरयुक्ता, उक्तार्थयोरुद्देश्यविधेयभावस्य क्वाऽप्यदर्शनादिति,

तन्न, ज्ञातत्वाज्ञातत्वयोरेव उद्देश्यत्वविधेयत्वप्रयोजकतया सुबन्तार्थे ज्ञातत्वसम्भवे उद्देश्यत्वस्य, तिङन्तार्थेऽज्ञातत्वसम्भवे विधेयत्वस्य बोधे बाधकाभावात् ।

यत्तु कालदेशयोरुद्देश्यतावच्छेदकत्वं यत्र तत्रैव विधेये देशकालावच्छिन्नत्वभानं, न प्रकृते तथेति,

तन्न, धनवान् सुखी भवेदित्यादौ धनकालावच्छिन्नत्वस्य सुखसत्तायामनुभवसिद्धत्वेन त्वदुक्तनियमाभावात् ।

यत्तु 'यस्मिन् पञ्च पञ्चजनाः—'इति पूर्ववाक्ये पञ्चजनशब्दस्य प्राणादिशब्दस्य च द्वैतसामान्यलाक्षणिकत्वं वर्णयित्वा पूर्ववाक्यस्य द्वैतसामान्यविशिष्टब्रह्मपरत्ववर्णनमयुक्तं, पञ्चशब्दस्याऽनन्वयप्रसङ्गात्, 'आकाशश्च प्रतिष्ठितः'इतिपृथगाकाशोक्तिवैयर्थ्याच्च, 'प्राणादयो वाक्यशेषात्'इति सूत्रे 'पञ्चजन'शब्दस्य प्राणादिपरत्ववर्णनानौचित्याच्चेति,

तन्न, 'पञ्च'शब्दस्य वाच्यार्थे पञ्चजने अन्वयाविरोधात् । सूत्रस्याऽपि शक्यार्थाभिप्रायत्वात्, कार्यकोटिप्रविष्टस्य कस्यचिद्वाचकेन 'पञ्चजन'शब्देन कार्यसामान्यलक्षणाया एव औचित्यात्, कारणीभूतमायाख्याव्याकृताकाशाख्यकारणाधारत्वं ब्रह्मणि कथितं न सिध्येदितिअव्याकृताकाशस्य 'आकाश'शब्देन पृथगुपादानसार्थक्यात् । उक्तश्रुतौ कृत्स्नद्वैताधारत्वमेव विवक्षितं, न तु पञ्चजनाकाशमात्राधारत्वम्, 'आकाशश्च'इति समुच्चयग्राहक'च'का-

रवैयर्थ्यापत्तेः । 'च'कारः प्रकृते नोक्तसमुच्चयफलकः, तत्तदुक्त्यैव तत्सिद्धेः, अनुक्तसमुच्चये विनिगमनाविरहात्, सर्वानुक्तसमुच्चये प्राप्ते निपातस्य द्योतकत्वमेव,न वाचकत्वमिति पक्षे 'च'कारद्योतितस्याऽनुक्तसर्वकार्यस्य पञ्चजनरूपकार्यस्यैव शब्दार्थत्वसिद्ध्यर्थमुक्तश्रुतिगत'च'कारतात्पर्यान्यथानुपपत्त्या 'पञ्चजन'शब्दस्य कृत्स्नकार्यलक्षणायाः श्रुत्यनुमतत्वेनाऽदोषत्वात् ।

यत्तु मिथ्यात्वघटकाभावः अप्रातिभासिकः, श्रुतिप्रमितत्वादित्यनुमानमयुक्तं, 'अथ रथान् रथयोगान् पथः सृजते'इति श्रुतिप्रमितस्य स्वाप्निकपदार्थस्य भवन्मते अप्रातिभासिकत्वाभावादिति,

तन्न,अस्वाप्निकार्थपरश्रुतिप्रमितत्वस्य हेतुत्वे विरोधाभावात् । 'असौ वा आदित्यो देवमधु'इत्यादौ आदित्ये मधुत्वारोप एव, न तु प्रातिभासिकमधुत्वोत्पत्तिः, बुद्धिपूर्वारोपस्थले 'मधुत्वाभाववानादित्यः,' 'अग्नित्वशून्यः पुरुषः'इतिबाधनिश्चयस्य पूर्वं सत्त्वेनाऽधिष्ठानादिसत्त्वादिविशिष्टविषयकाज्ञानासम्भवेन तत्परिणामभूतमधुत्वादिप्रातिभासिक नाऽस्ति, येनाऽत्र व्यभिचारः स्यात् । तत्त्वदीपने बुद्धिपूर्वारोपस्थले आरोपो नाऽविद्यावृत्तिः, अविद्याया असम्भवात्, किन्तु मनोवृत्तिरूपेच्छाविशेष एवेत्युक्तम् ।

यत्तु विनाशिनिष्ठं स्वसमानाधिकरणाभावप्रतियोगित्वं मिथ्यात्वमित्युक्तमिथ्यात्वघटकतया विनाशिनिष्ठत्वं निविष्टं, तच्च 'अतोऽन्यदार्तम्'इतिश्रुतिसिद्धमित्युक्तिरयुक्ता,'नेह'इतिश्रुत्या ब्रह्मभिन्नत्वस्य प्रतियोगितावच्छेदकतया भानात् विनाशित्वविशिष्टस्य तस्य ब्रह्मभिन्नत्वस्य गुरुतया प्रतियोगितावच्छेदकत्वासम्भव इति,

तन्न, आत्मभिन्नत्वस्यैव प्रतियोगितावच्छेदकत्वात् आ-

त्मभिन्नत्वावच्छिन्नाभावप्रतियोगित्वे विनाशिनिष्ठत्वमात्रस्य श्रुतिसिद्धस्य कथनं लघुचन्द्रिकायां, न तु विनाशित्वस्य प्रतियोगितावच्छेदककोटिप्रविष्टत्वमपि, अतोऽनुक्तोपालम्भनं त्वल्लेखनकुतर्ककोलाहलः ।

यत्तु द्वैतविशिष्टे ब्रह्मणि द्वैताभावस्य 'नेह'इतिश्रुत्या बोधने तद्बोधस्याऽऽहार्यत्वं भवेत्, तत् माभूदिति 'इह'इतिपदस्य दृश्यविशिष्टार्थत्वं स्वीकृत्य दृश्यविशिष्टे ब्रह्मणि द्वैताभावबोधकत्वं यत् श्रुतेः स्वीकृतं, तदयुक्तम्, स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानस्यैवाऽऽहार्यतया अद्वैतिमते द्वैत—तदभावयोर्विरोधानुपगमेनाऽऽहार्यत्वाशङ्काया एवाऽयुक्तत्वादिति,

तन्न, शङ्कातत्परिहारग्रन्थस्य तत्तदभावयोः, 'तत्तदभावप्रमनियतयोश्च एकेनैव धर्मेण उद्देश्यतावच्छेदकविधेयनिषेधप्रतियोगिभावो यस्मिन् भासते तज्ज्ञानस्याऽऽहार्यत्वं'इत्यङ्गीकर्तृपक्षधराऽन्तप्राचीनतार्किकपक्षाभिप्रायकत्वात् । आहार्यत्वशरीरे च तन्मते विरोधस्याऽनिवेशात् । न च श्रुतौ भिन्नरूपेण प्रतियोगि-तद्भावबोधस्वीकारे कथं तया मिथ्यात्वसिद्धिः ? मिथ्यात्वशरीरे प्रपञ्चनिष्ठप्रकारताप्रतियोगितयोरेकधर्मावच्छिन्नत्वानिवेशादिति वाच्यम् । तुष्यतु दुर्जन इति न्यायेनाऽऽहार्यज्ञानस्य स्वीकृत्य परीत्या अप्रामाण्यं रूपभेदेन प्रपञ्चतदभावयोरुक्तश्रुत्या ब्रह्मणि बोधस्वीकारात । अत एव लघुचन्द्रिकायामुक्तश्रुतिमूलमिथ्यात्वानुमितौ आहार्यत्वेऽपि प्रामाण्यमस्त्येवेति सिद्धान्तस्थितिमवलम्ब्याऽनुमितिविषयमिथ्यात्वशरीरे प्रकारताप्रतियोगितयोरेकधर्मावच्छिन्नत्वं निवेशितम् । रूपभेदेन प्रपञ्चतदभावबोधस्य श्रुतिजन्यस्य तुष्यत्विति न्यायरीत्यधीनत्वाङ्गीकारेण प्रवर्तमानत्वे तु श्रुतिमूलानुमितौ मिथ्यात्वे एकधर्मेण प्रकारता-

प्रतियोगितानिवेशनमेव सूचकम् ।

यत्तु प्रत्यक्षसिद्ध इव प्रत्यक्षबाधितेऽपि प्रतियोगिमति तत्काले प्रतियोग्यभावे श्रुतेस्तात्पर्यं नाऽस्ति, 'आदित्यो यूपः' इत्यादौ, त्वन्मते 'तत्त्वमसि'इत्यादौ प्रत्यक्षाविरोधायैव आदित्यसदृशे, विशेष्यचैतन्यस्वरूपाभेदे च लक्षणास्वीकारादिति,

तन्न, 'आदित्यः'इत्यत्राऽन्यशेषत्वात् अन्यापेक्षितप्राशस्त्यार्थस्य प्रमाणान्तराविरोधेनोपपत्तौ प्रत्यक्षाविरोधाय लक्षणा स्वीकृता, 'तत्त्वमसि'इत्यादौ उपक्रमोपसंहाराद्यनुरोधेन निर्विशेषस्वरूपाभेदपरत्वं स्वीकृतं, न तु प्रत्यक्षाविरोधाय, प्रकृते च 'नेह'इति वाक्यस्याऽनन्यशेषत्वात् स्वरसतः प्रतीयमानेऽर्थे जगन्मिथ्यात्वे तात्पर्यं नाऽस्तीति वक्तुमशक्यत्वादित्यलम् ।

एतेन न्यायभास्करे पक्षतावच्छेदक—प्रथममिथ्यात्वविषये गौडब्रह्मानन्दान्तग्रन्थलिखितमिव यत् स्वकपोलकल्पितं कुतर्ककोलाहलजालमद्वैतमततया लिखित्वा दूषितं, तद्वत् द्वितीयमिथ्यात्वविषयेऽपि प्रायेण लिखितं, दूषितं च, तत्सर्वं परास्तम्, अनुक्तोपालम्भनत्वादिति ।

इति न्यायभास्करखण्डने द्वितीयमिथ्यात्वसमर्थनं समाप्तम् ।

ज्ञाननिवर्त्यत्वं मिथ्यात्वम् । तच्चाऽधिष्ठानविषयकपटुतमसंस्कारसहितप्रमात्वसमानाधिकरणभेदप्रतियोगितावच्छेदकताशून्य-स्वपूर्वत्व-स्वसमानविषयकत्वोभयसम्बन्धावच्छिन्नाज्ञान-तत्संस्कारान्यतरप्रतियोगिताकाभावप्रतियोगित्व—तादृशप्रमात्वसमानाधिकरणभेदप्रतियोगितावच्छेदकताशून्य-स्वपूर्वत्व-स्वप्रयोजकाज्ञानसमानविषयकत्वोभयसम्बन्धावच्छिन्नाज्ञानप्रयुक्ततत्संस्कारान्यतरप्रतियोगिताकाभावप्रतियोगित्व—तादृशप्रमात्वसमानाधि-

करणभेदप्रतियोगितावच्छेदकताशून्य-स्वपूर्वत्व-स्वप्रयोजकाज्ञान-समानविषयकत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकशुक्तिरूप्यादि-प्रातिभासिकाभावप्रतियोगित्वान्यतमवत्त्वम् । तादृशशुद्धब्रह्मप्रमात्वाधिकरणे स्वपूर्वत्व—स्वसमानविषयकत्वोभयसम्बन्धेनाऽज्ञान-तत्संस्कारान्यतरस्य स्वपूर्वत्व-स्वप्रयोजकाज्ञानसमानविषयकत्वोभयसम्बन्धेनाऽज्ञानप्रयुक्त-तत्संस्कारान्यतरस्याऽसत्त्वेन तादृशान्यतराभाववद्भेदो न भवतीति तादृशभेदप्रतियोगितावच्छेदकताशून्यत्वस्य उक्तान्यतराभावे सत्त्वेन उक्तशून्यत्वविशिष्टाभावप्रतियोगित्वस्याऽज्ञान-तत्संस्काराज्ञानप्रयुक्त-तत्संस्कारेषु सत्त्वात् पक्षे न साध्यबाधः । दृष्टान्ते शुक्तिरूप्ये तादृशप्रमारूपशुक्तिप्रमात्वाधिकरणे स्वपूर्वत्व-स्वप्रयोजकाज्ञानसमानविषयकत्वोभयसम्बन्धेन शुक्तिरूप्यस्याऽसत्त्वात् तादृशसम्बन्धेन शुक्तिरूप्याभाववद्भेदो न सम्भवतीति तादृशभेदप्रतियोगितानवच्छेदकत्वस्य शुक्तिरूप्याभावे सत्त्वेन तादृशाभावप्रतियोगित्वमादाय साध्यमुपपादनीयम् ।

अत्र प्रथमान्यतराभावप्रतियोगित्वमात्रविवक्षणे अज्ञान-प्रयुक्तवियदादि-तत्संस्काराणां शुक्तिरूप्यस्य च साध्यं न सिद्ध्यतीति द्वितीयप्रतियोगित्व-तृतीयप्रतियोगित्वान्तयोर्निवेशः । द्वितीप्रतियोगित्वान्तमात्रविवक्षणे अज्ञान—तत्संस्कारयोः शुक्तिरूप्ये च साध्यं न सिद्ध्यतीति प्रथमप्रतियोगित्वान्तनिवेशः । दृष्टान्तसङ्ग्रहार्थं तृतीयप्रतियोगित्वान्तनिवेशः ।

यद्यपि तृतीयप्रतियोगित्वान्तानिवेशेऽपि शुक्तिरूप्यस्याऽपि अज्ञानप्रयुक्तत्वाश्रयतया साध्यं सिद्धं भवति, शुक्तिप्रमायामपि घटादेः प्रयोजकाज्ञानसमानविषयकत्वाभावेन तद्घटितोभयसम्बन्धेनाऽज्ञानप्रयुक्तसामान्याभावसत्त्वात्, तथाऽपि वह्न्यंशे उपेक्षात्मिकायां समूहालम्बनशुक्तिप्रमायां वह्न्यारोपितगुञ्जापुञ्जस्य

उक्तोभयसम्बन्धेन सत्त्वात् अज्ञानप्रयुक्तसामान्याभावस्य शुक्तिप्रमात्वव्यापकत्वाभावात् तृतीयप्रतियोगित्वान्तनिवेश आवश्यकः। सिद्धान्ते अत्यन्ताभावमात्रस्य स्वाभावसामानाधिकरण्यरूपकेवलान्वयितायाः स्वीकारात् अत्यन्ताभावघटितं व्यापकत्वं न सम्भवतीति भेदघटितव्यापकत्वनिवेशनम् । उक्तप्रमात्वव्यापकाभावस्य उक्तसम्बन्धावच्छिन्नप्रतियोगित्वमिति निवेशे अज्ञानप्रयुक्त-तत्संस्कारान्यतरस्य स्वपूर्वत्व—स्वसमानविषयकत्वोभयसम्बन्धावच्छिन्न-घटत्वपटत्वोभयरूपव्यधिकरणधर्मावच्छिन्नाभावं, स्वपूर्वत्व—स्वप्रयोजकाज्ञानसमानविषयकत्वोभयसम्बन्धावच्छिन्न घटत्वपटत्वोभयरूपत्वयधिकरणधर्मावच्छिन्नाज्ञान—तत्संस्काराभावं च उक्तप्रमात्वव्यापकं गृहीत्वा सिद्धसाधनापत्तिः स्यादतः तत्तद्व्यापकतावच्छेदकत्वेन तत्तदन्यतराभावत्वं निवेशितम् । जीवन्मुक्तप्रमाकाले अज्ञानलेशानुवृत्त्या तत्प्रमायामुक्तान्यतराभावाभावात् व्यापकत्वमभावस्य न भवतीति सहितान्तनिवेशः ।

यत्तु ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि उक्तप्रमायामुक्तोभयसम्बन्धावच्छिन्नाभावः सुलभः, येन सम्बन्धेन यत्र यत्सम्बद्ध्यते, तेन सम्बन्धेन तत्र तदभावस्य भवतामनुमतत्वादिति,

तन्न, ज्ञानाज्ञानयोः परस्परं नाश्यनाशकभावाख्यविरोधस्य सर्वसिद्धतया ब्रह्मज्ञानेन ब्रह्माज्ञाननाशे सति तत्प्रयुक्तजगतः सत्त्वोक्तेर्दुरुक्तत्वात् ।

यत्तु ब्रह्मविषयकनिर्विकल्पकप्रमानङ्गीकारमात्रेणैव उक्तसाध्यासिद्ध्या तत्सिद्धावर्थान्तरं,तादृशप्रमासामान्ये एव स्वप्रयोजकाज्ञानसमानविषयकत्वघटितसम्बन्धद्वयेनाऽवच्छिन्नाभावस्य प्रमात्वव्यापकतासम्भवादिति,

तन्न, 'तमेव विदित्वाऽतिमृत्युमेति'इति श्रुतिगत 'एव'कारेण

ब्रह्मप्रमायाः निर्विशेषविषयकत्वेन निर्विकल्पकत्वसिद्ध्या निर्विकल्पकब्रह्मज्ञानानङ्गीकर्तुः श्रुतिबाह्यत्वात् ।

यत्तु ब्रह्मज्ञानानन्तरं जगतः सत्त्वेऽपि कालानवस्थानमात्रेणोक्तसाध्यसिद्ध्या अर्थान्तरं, कालघटितसम्बन्धद्वयावच्छिन्नाभावस्य मुक्तौ सत्त्वादिति,

तन्न, ब्रह्मज्ञानेनाऽज्ञाननाशे स्थिते अज्ञानप्रयुक्तजगतः सत्त्वोक्तेर्निर्लज्जभाषणत्वात् ।

एवं ज्ञानाधीन–स्व–स्वीयसंस्कारोभयनाशप्रतियोगित्वं ज्ञाननिवर्त्यत्वम् । उत्तरज्ञाननाश्यत्वमादाय पूर्वज्ञाने सिद्धसाधनवारणाय संस्कारनिवेशः । स्मृतिनाश्यसंस्कारकत्वमादायाऽनुभवे सिद्धसाधनवारणाय 'स्व'इत्यस्य निवेशः । न च ब्रह्मज्ञानात् प्रपञ्चस्य नाशाभ्युपगमे 'विद्वान् नामरूपाद्विमुक्तः'-इतिश्रुतिविरोधापत्तिः, चरमक्षणस्य स्व–स्वेतरयावद्वस्तुध्वंसरूपत्वाङ्गीकारात्, एकत्राऽपि रूपभेदेन ध्वंसप्रतियोगित्वानुयोगित्वयोः सम्भवात् तत्र सकलदृश्यत्वेन प्रतियोगित्वं, चरमतत्त्वज्ञानाश्रय—तत्क्षणव्यक्तित्वेनाऽनुयोगित्वम्, घटाभावे सम्बन्धान्तरेण स नाऽस्तीति प्रत्ययेन घटाभावादिप्रतियोगिकात्यन्ताभावत्वस्येव 'ज्ञानात्सर्वं दृश्यं नष्टम्'इत्यादिप्रत्ययबलेन सर्वदृश्यप्रतियोगिकस्य चरमक्षणानुयोगिकस्य ध्वंसत्वस्य स्वीकारात् । मुद्गरपातेन घटस्य नाशेऽपि तत्संस्कारस्याऽनाशात् उभयप्रतियोगिकनाशस्य ब्रह्मज्ञानमात्रप्रयुक्तत्वाच्च नाऽतीतघटादौ बाधः ।

यत्तु अपेक्षाबुद्ध्यात्मकानुभवानन्तरजातसंस्कारेण स्मृत्युत्पत्तौ तादृशस्मृत्या अनुभवसंस्कारोभयनाशात् तादृशानुभवे सिद्धसाधनमिति,

तन्न, स्मृतेः संस्कारदार्ढ्यार्थत्वेन तन्नाशकत्वाभावस्य सि-

द्धौ साधितत्वात् ।

यत्तु शुक्तिरूप्ये दृष्टान्ते साध्यवैकल्यं, रजतज्ञानकारणपरम्परान्तर्गतस्य रजतसंस्कारस्य शुक्तिज्ञानेनाऽनाशात्, अन्यथा रजतस्मृत्यनुपपत्तेरिति,

तन्न, शुक्तिज्ञानेन रजतस्मृतिहेतोः रजताकाराविद्यावृत्त्युत्तरावस्थाविशेषरूपस्य रजतविषयकसंस्कारस्य रजतोत्तरावस्थारूपरजताविषयकरजतसंस्काराद्भिन्नस्याऽनाशेऽपि शुक्तिरजतस्य तदुत्तरावस्थारूपस्य रजताविषयकस्य रजतसंस्कारस्य च नाशेन दृष्टान्ते साध्यवैकल्याप्रसक्तेः । न ह्यत्र रजताकाराविद्यावृत्तिर्दृष्टान्तः, येन दृष्टान्ते साध्यवैकल्यं स्यात्, शुक्तिरजतं खलु दृष्टान्तः ।

यत्तु ध्वंसस्य सामान्यधर्मावच्छिन्नप्रतियोगित्वाङ्गीकर्त्रा एकविशेषधर्माधिकरणसमये तादृशध्वंसो नाऽभ्युपगत इति,

तन्न, अत्यन्ताभाववत् सामान्यधर्मावच्छिन्नप्रतियोगित्वाङ्गीकारे तद्वदेव घटाभावे 'स नाऽस्ति'इत्यादिवत् तादृशध्वंसाङ्गीकारस्य न्याय्यत्वात् ।

यत्तु ज्ञानाद्दृश्यमात्रस्य केनचिद्रूपेण नाशेऽपि रूपान्तरेणाऽवस्थानादर्थान्तरमिति,

तन्न, ज्ञानेनाऽज्ञाननाशे अज्ञानाधीनप्रपञ्चस्य स्वरूपत एव नाशावश्यम्भावे रूपान्तरेणाऽवस्थानस्य वक्तुमशक्यत्वात् । न हि सूर्यस्योदये तमसो नाशे तमःकार्यस्य केनचिद्रूपेणाऽवस्थानं सम्भवति ।

यत्तु अद्वैतिमते प्रतियोग्यत्यन्ताभावयोरविरोधित्ववत् प्रतियोगिध्वंसयोरपि अविरोधित्वमास्ताम्, तथा च ज्ञानाद्दृश्यनाशेऽपि दृश्यसत्त्वापत्तिरिति,

तन्न, न्यायमते निरवयवपरमाण्वोः संयोगस्याऽवच्छेदकभेदं विनाऽप्यव्याप्यवृत्तित्वादविरोधित्वं स्वभावेन स्वीकृतम्, संयोगसामान्यस्याऽव्याप्यवृत्तित्वाङ्गीकारात्, तद्वत् ध्वंसप्रतियोगिनोः न क्वाऽप्यव्याप्यवृत्तित्वं तैः स्वीकृतम्, अन्येन वा केनाऽपि, अतः प्रतियोग्यत्यन्ताभाववत् प्रतियोगिध्वंसयोरविरोधित्वापत्तिकथनस्य मन्दयुक्तित्वात् ।

यत्तु चरमक्षणस्य स्वध्वंसरूपत्वमनुपपन्नं, प्रतियोगिध्वंसयोरत्यन्तभिन्नत्वेनाऽभेदानुपपत्तेः, प्रतियोगितावच्छेदकानुयोगितावच्छेदकभेदस्य न स्वाश्रयभेदोपपादकत्वम्, अतस्तल्लेखनमप्ययुक्तमिति,

तन्न, 'विद्वान् नामरूपाद्विमुक्तः'इतिश्रुतिबाधात् अन्यत्राऽदृष्टमपि प्रतियोगिध्वंसयोरत्यन्ताभिन्नत्वं, चरमक्षणस्य स्वध्वंसरूपत्वं, रूपभेदेन चरमक्षणतद्ध्वंसयोर्भिन्नत्वं च स्वीकृतमित्यादिलघुचन्द्रिकार्थानभिज्ञानात् ।

यत्तु ध्वंसाधिकरणक्षणे प्रतियोग्यवस्थानाभ्युपगमे 'उत्तरोत्पादे च पूर्वनिरोधात्'इतिबौद्धमतनिराकरणपरसूत्रविरोधः, उत्तरक्षणोत्पत्तिसमये पूर्वक्षणस्य स्वनाशेन साकमनवस्थानात् कारणत्वानुपपत्तिरिति हि सूत्रार्थः अविरोधे प्रतियोगिध्वंसयोः कथमुपपद्येतेति,

तन्न, अत्र श्रुतिबलात् चरमक्षणस्यैव स्वध्वंसत्वस्वीकारात् । प्रतियोगिनः सकाशात् स्वतो भिन्नस्य ध्वंसस्य तु प्रतियोगिना साकमवस्थानं नाऽस्त्येव, प्रमाणाभावात्, सूत्रं च प्रतियोगिभिन्नध्वंसविषयं,प्रकृते च उक्तश्रुतिबलादेव स्वरूपतः चरमक्षण--तद्ध्वंसयोरभेदः, धर्मभेदेनौपचारिको भेदः, चरमक्षणे औपाधिकभेदवतोस्तत्क्षण-तद्ध्वंसयोः सहाऽवस्थानं, तदुत्तरं च नाऽवस्थानमित्यर्थस्य

लघुचन्द्रिकाग्रन्थसिद्धत्वेन त्वत्कशङ्काया अनवकाशात् ।

एवं स्वसमानविषयकत्व-कालिकविशेषणत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः योऽज्ञानतत्संस्कारान्यतरस्याऽभावः, यश्च स्वप्रयोजकाज्ञानसमानविषयकत्व-स्वपूर्वत्वोभयसम्बन्धावच्छिन्नाज्ञानप्रयुक्त-तत्संस्कारान्यतराभावो ज्ञानाधीनस्तत्प्रतियोगित्वं ज्ञाननिवर्त्यत्वम् । ध्वंसस्य पूर्वपरिष्कारे इव एतत्परिष्कारे 'ज्ञानात् दृश्यं सर्वमुच्छिद्यते'इति प्रत्ययात् उक्तात्यन्ताभावस्याऽपि ज्ञानाधीनत्वं स्व-स्वेतरसर्वदृश्यनाशत्वं च स्वीक्रियते । न च सम्बन्धद्वयं माऽस्तु, स्वपूर्वत्वमेव सम्बन्धोऽस्त्विति शङ्क्यम्, स्वपूर्वत्वसम्बन्धेनाऽन्यतराभावस्याऽज्ञान तत्संस्कारयोरधिष्ठानज्ञानस्य च परस्परमविरोधस्य सम्भावितत्वेन स्वसमानविषयकत्वं ज्ञानाज्ञानयोर्विरोधप्रयोजकमस्तीत्येतत्सूचनार्थं सम्बन्धद्वयस्य निवेशितत्वात्, तयोरसमानविषयकत्वे घटाज्ञान—पटज्ञानयोरिवाऽविरोधित्वापत्तेः । न च घटे स्वसमानविषयकत्वाभावेन तद्घटितसम्बन्धद्वयावच्छिन्नाज्ञान-तत्संस्काराभावसत्त्वेन सिद्धसाधनमिति वाच्यम् । तस्य ज्ञानाधीनत्वासिद्धेः । प्रकृतानुमानेनैव तस्याऽपि ज्ञानाधीनत्वमादायाऽर्थान्तरमपि न शङ्क्यम् । तस्याऽभावस्य घटे तुच्छे अन्यत्र च स्वत एव सिद्धस्य ज्ञानाधीनत्वसाधनासम्भवात्, सर्वस्य भगवत्सङ्कल्पाधीनत्वेऽपि समन्वयसूत्रभगवत्पादभाष्यरीत्या सङ्कल्पस्य क्रियात्वेन ज्ञानाधीनत्वाभावात् । न च घटादेरज्ञानप्रयुक्तत्वानभ्युपगमेऽपि स्वप्रयोजकाज्ञानसमानविषयकत्वघटितसम्बन्धद्वयावच्छिन्नाभावस्य केवलान्वयिनः ज्ञानाधीनत्वसिद्धिमादायाऽर्थान्तरमिति शङ्क्यम् । स्वतःसिद्धस्य ज्ञानाधीनत्वसिद्ध्यसम्भवात् ।

एवं ज्ञानाधीनो यः स्वतादात्म्यापन्न-स्वात्मकवस्तुसामान्य-

स्याऽभावः, तत्प्रतियोगित्वं ज्ञाननिवर्त्यत्वम् । स्वात्मकं च स्वसमानसत्ताकं ग्राह्यम्, तच्च स्वीयसंस्कार–स्वीयपरिणामादिरूपमेव। ज्ञानेन हि अज्ञान–तत्परिणामसामान्यस्याऽत्यन्ताभावः स्वोत्पत्तिद्वितीयक्षणावच्छिन्नः साध्यते, 'न'इतिश्रुतिसिद्धस्य तादात्म्येन सार्वकालिकस्याऽभावस्य साध्यता च क्षेमसाधारणी, स चाऽभावः स्वान्यसर्वदृश्याविरोधी क्षणिक इति ।

यत्तु ब्रह्मणि तादात्म्यसम्बन्धेन जगतः सत्त्वेऽपि तत्सम्बन्धावच्छिन्नाभावस्य शशशृङ्गादिनिष्ठस्य ज्ञानाधीनत्वसिद्धिमात्रेण उक्तसाध्यसिद्धिसम्भवेनाऽर्थान्तरं, घटत्वपटत्वाभ्यां दृश्यसामान्याभावस्य दृश्याविरोधिनो ज्ञानाधीनत्वसिद्धिमादाय वाऽर्थान्तरमिति,

तन्न, उक्ताभावयोस्तत्र तत्र स्वत एव सिद्धतया ज्ञानाधीनत्वासम्भवात्, ज्ञानस्य तत्साधनत्वासम्भवाच्च ।

यत्तु तादात्म्यसम्बन्धेन दृश्यवति दृश्याभावस्य भवन्मते सर्वदा सत्त्वेन तस्य ज्ञानाधीनत्वासम्भव इति,

तन्न, तस्य ज्ञानजन्यत्वाभावेऽपि लघुचन्द्रिकोक्तायाः क्षेमसाधारणजन्यतायाः सम्भवाविरोधात् । क्षेमसाधारणजन्यता च पूर्वं दृश्याभावे सत्यपि दृश्यं नास्तीति न व्यवह्रियते, ज्ञानोत्तरक्षणे तु दृश्यं नाऽस्तीति व्यवह्रियते, इत्यतो या व्यवहारविषयता दृश्याभावस्य, सैव । न च दृश्याभावस्य स्वात्मकेन यत्किञ्चिद्दृश्येन साकमविरोधः, अन्यदृश्येन विरोध इति कल्पनमयुक्तमिति वाच्यम् । तादृशाभावस्य स्वप्रतियोगिकत्वाकल्पनात्, स्वान्यदृश्यप्रतियोगिकत्वकल्पनात् । न च तर्हि दृश्याभावस्याऽन्योऽभावस्तस्याऽप्यन्य इत्यनवस्था शङ्क्या, उक्तदृश्याभावाभावस्य ब्रह्मरूपत्वेनाऽनवस्थाद्यभावात्, अत एव

तादृशाभावस्य क्षणिकत्वमपि ब्रह्मात्मकस्वाभावस्वक्षणाभावकत्वमेव ।

एवं स्वाधिकरणकालपूर्वत्वशून्यज्ञानाधिकरणकालकत्वमेव ज्ञाननिवर्त्यत्वम् । यत्र ज्ञाननिवर्त्यत्वं साध्यते, तत्परं स्वपदं, दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वानाधिकरणत्वं दृश्योच्छेदः, चरमतत्त्वज्ञानोत्पत्तिक्षणे च दृश्याधिकरणक्षणपूर्वत्वं नाऽस्ति, तदुत्तरक्षणस्याऽप्रसिद्धत्वात्, तत्पूर्वक्षणपूर्वत्वस्य क्षणान्तरे प्रसिद्धस्याऽपि तत्राऽभावात्, न तु न्यायमत इव ध्वंस एव दृश्योच्छेदः, तस्य सत्यत्वे अद्वैतश्रुतिविरोधात्, मिथ्यात्वे च चरममनोवृत्त्यनन्तरं उत्पन्नस्य तस्य समुच्छेदकाभावेन 'विद्वान् नामरूपाद्विमुक्तः' इतिश्रुतिविरोधापत्तेः ।

यत्तु विशिष्टाद्वैते सर्वमुक्तौ जडप्रकृतेरीश्वरात् परस्परं च भिन्नानामनन्तजीवानां तदीयगुणानां चाऽवस्थानेऽपि कालतत्त्वस्य क्षणाद्यात्मना तत्तत्कार्यानुगुणपरिणामहेतुकर्माभावेन प्रकृत्यादेरिव स्वरूपेणाऽवस्थितत्या प्रकृत्यादौ सर्वत्र स्वाश्रयकालपूर्वत्वाभाववज्ज्ञानाधिकरणकालकत्वस्य सत्त्वात् (पूर्वत्वाभाववांश्चाऽसौ ज्ञानाधिकरणकालश्चेति विग्रहः, तदानीं जन्यकालानभ्युपगमात्, महाकालमात्रसम्बन्धितयाऽवस्थानेऽपि तस्याऽनादितया तद्बाधकपूर्वत्वस्य काऽपि वक्तुमशक्यत्वात् ।) तन्मतस्थं प्रति साधने सिद्धसाधनमिति,

तन्न, 'एकं पादं नोद्धरति स लीलार्थं' इतिश्वेताश्वतरीयश्रीमच्छङ्करभगवत्पादीयभाष्योदाहृतश्रुतिस्मृतिविरोधप्रसङ्गेन 'यावत्सर्वमुक्ति निःसन्धिबन्धमीश्वराभावापत्तिर्मुक्तस्य, सर्वमुक्तौ निर्विशेषचिद्भावापत्तिः' इति वदतोऽप्यय्यदीक्षितस्य मतवत् सर्वमुक्त्यङ्गीतृभवन्मतस्याऽप्यसङ्गतत्वात् ।

अत एव 'सकृद्विभातो ह्येवाऽस्य भवति' इति दहराद्युपासनामुक्तं प्रति प्रकाशाव्यभिचरितस्य भाविनः सर्वस्याऽपि कालस्य एकनदीरूपत्वं श्रूयमाणं कार्यरूपत्वेनोपपद्यते, अन्यथा नद्याः प्रतिक्षणभिन्नप्रवाहप्रचयरूपत्वात् नदीरूपत्वोक्त्या उक्तकालस्याऽपि क्षणप्रचयरूपत्वसिद्धिर्न स्यात्, इष्टापत्तौ नदीरूपत्वोक्त्यनुपपत्तिः ।

यत्तु दृश्यस्वरूपनिवृत्तिं विना उक्तकल्पनिर्वाहात् अर्थान्तरमिति,

तन्न, एतत्कल्पे स्वरूपस्य निवृत्तिरस्तु वा मा वा, चरमतत्त्वसाक्षात्कारक्षणपूर्वक्षणेऽप्येव दृश्याविभास इत्यस्मदभिमतस्य सिद्ध्या अर्थान्तराप्रसक्तेः ।

यत्तु स्वत्वस्याऽननुगतत्वेन पक्षदृष्टान्तसाधारण्यासम्भव इति,

तन्न, प्राचीनमते स्वत्वस्याऽनुगतत्वेन एतत्परिष्कारस्य प्राचीनमताभिप्रायकत्वात् ।

यत्तु 'सदेव' इत्यादिश्रुतेः शुद्धब्रह्मपरत्वमेव, अद्वितीयत्वोक्तेः, तत्र च 'अग्रे आसीत्' इतिकालसम्बन्धित्वबोधकपदसत्त्वात् शुद्धमपि कालसम्बन्धीति,

तन्न, प्रथमावगतकालसम्बन्धरूपविशेषानुरोधेन चरमाद्वितीयपदस्य सविशेषपरत्वात् । छान्दोग्यभाष्ये श्रीमच्छङ्करभगवत्पादैरद्वितीयपदस्य ब्रह्मकार्यभूतद्वितीयाभाववदित्यर्थस्यैव कथनात् ।

न च शुद्धस्य कालासम्बन्धित्वे तुच्छत्वं शङ्क्यम्,

कालस्य कालासम्बन्धित्वेऽप्यतुच्छत्वात् । कालसम्बन्धित्वं शुद्धत्वव्याघातकमेव ।

एतत्परिष्कारे कालत्वकालसम्बन्धैतच्छून्यसद्रूपस्य शुद्धत्वेन शुद्धस्याऽपि विवरणादौ कल्पितधर्मस्वीकारात् कालसम्बन्धोऽपि

कल्पितः शुद्धे स्यादिति न शङ्क्यम्,

तादृशविवरणग्रन्थस्य प्रस्थानान्तरत्वात् । शुद्धस्य कालासम्बन्धित्वे कालावृत्तित्वरूपे 'स्वे महिम्नि प्रतिष्ठितः' इति श्रुतिर्मानं, 'असङ्गो ह्ययं पुरुषः' इति श्रुतिश्च ।

न च 'असङ्ग'श्रुतिरकल्पितसम्बन्धनिषेधपरेति शङ्क्यम्,

सङ्कोचापत्तेः ।

यत्तु सत्त्वं कालसम्बन्धव्याप्यमिति,

तन्न, काले व्यभिचारात् ।

न च कालः सदाऽस्तीति प्रतीत्या प्रमेयत्वं प्रमेयमितिवत् कालेऽपि कालसम्बन्धसिद्धिरिति शङ्क्यम्,

उक्तप्रतीत्या काले कालसम्बन्धासिद्धावपि कालसम्बन्धे कालसम्बन्धासिद्धेः कालसम्बन्धे व्यभिचारस्य दुर्वारत्वात् ।

अद्वैतिनां श्रुत्यनुसारिणो बहवः पक्षाः सन्ति, तत्रोक्तपक्षे नैयायिकवत् ध्वंसो जन्यो नाऽभ्युपगम्यते । नैयायिकमतेऽपि जन्यध्वंसाभ्युपगमो निर्युक्तिकः, आत्यन्तिकदुःख ध्वंसस्तत्त्वज्ञानेन जायत इति वदता नैयायिकेन एतावत्पर्यन्तमनुवर्तमानं दुःखं क्व गतमितिप्रश्नपरिहारस्य कर्तुमशक्यत्वात् । घटध्वंसस्थले घटः क्व गत इति प्रश्ने घटः कपालावस्थां गत इतिवत्, दुःखमुत्तरावस्थां गतमिति वक्तुमशक्यत्वात्, अमूर्तत्वेन तस्योत्तरावस्थाभावात्, किन्तु तत्त्वज्ञानस्य दुःखाश्रयपूर्वकालत्वाभावव्याप्यत्वनियमात् तत्काले दुःखं न भासत इत्येव वक्तव्यं, तद्वदस्मत्सिद्धान्ते चरमतत्त्वज्ञानस्य दृश्याश्रयकालपूर्वत्वाभावव्याप्यतया तदा दृश्यसामान्यं न भासत इत्येवोच्यते, तथा च मुद्गरपातस्थले घटादेरुत्तरावस्थारूपो वा अन्यो वा नाश उत्पद्यते, सर्वदुःखविरोधितत्त्वज्ञानस्थले दुःखना-

शो नोत्पद्यते, तज्ज्ञानकाले तज्ज्ञानव्यापकदुःखाश्रयकालपूर्वत्वाभावनियमाधीनदुःखाप्रतिभास इतिकल्पनापेक्षया घटादिनाशात्यन्तिकदुःखनाशादिस्थलेऽपि ध्वंसमनङ्गीकृत्य उक्तनियमात् प्रतियोग्यभानमेव न्याय्यमिति न ध्वंसस्वीकारावश्यकता ।

न च 'दण्डपातेन घटो ध्वस्तः', 'ब्रह्मज्ञानेन मोक्षः' इत्यादौ घटध्वंस—संसारध्वंसरूपमोक्षयोः तृतीयया जन्यत्वं प्रतीयत इति शङ्क्यम्,

ध्वंस—मोक्षशब्दयोः घट—संसाराश्रयकालपूर्वत्वाभावार्थकतया तृतीयायाश्च व्यापकार्थतया दण्डपातव्यापकः घटाश्रयकालपूर्वत्वाभावः', 'ब्रह्मज्ञानव्यापकः संसाराश्रयकालपूर्वत्वाभावः' इत्येव बोधोत्पत्तेः ।

न च तर्हि मुद्गरपातकालीनवायुसंयोगस्याऽप्युक्तव्याप्यत्वसत्त्वेन 'वायुसंयोगाद्घटो नष्टः' इत्यादिप्रतीत्यापत्तिरिति वाच्यम्,

'वायुसंयोगाद्घटो नष्टः' इत्यापादनस्य वायुसंयोगत्वेन वायु संयोगस्याऽव्याप्यत्वेनाऽसम्भवात्, 'दण्डपातकालीनवायुसंयोगेन घटो नष्टः' इत्यापादने दण्डपातस्याऽपि व्याप्यकोटावश्यं निवेशनीयतया दण्डपात एव व्याप्यत्वपर्यवसानेन इतरांशसमर्पकपदस्य व्याप्यकोटिनिवेशने प्रयोजनाभावात्, विशिष्टे व्याप्यत्वसत्त्वेन तदापादने प्राप्ताप्राप्तविवेकन्यायेन दण्डपातव्याप्यत्व एव पर्यवसानेनाऽनिष्टाभावाच्च ।

यत्तु तत्त्वज्ञानस्य तत्त्वज्ञानार्थप्रयत्नरूपश्रमात्मकदुःखनाशरूपत्वेन दुःखध्वंसरूपतया मुमुक्षोस्तत्त्वज्ञाने प्रवृत्तिरित्ययुक्तं, तत्त्वज्ञाने उक्तविधदुःखध्वंसत्वेन प्रवृत्तिसिद्धावपि तत्त्वज्ञानत्वेन तत्राऽनुभवसिद्धायाः प्रवृत्तेरनुपपत्तेरिति,

तन्न, येन रूपेण यस्य दुःखध्वंसत्वं, तेन रूपेण तस्ये-

च्छाविषयत्वस्याऽऽनुभविकत्वात्, प्रकृते च तत्त्वज्ञानत्वेन तस्य निरुक्तरीत्या दुःखध्वंसत्वात् तत्त्वज्ञानत्वेन तस्येच्छाप्रवृत्त्यादिविषयत्वोपपत्तेः ।

यत्तु अभिव्यज्यमानात्मसुखव्याप्यत्वेनोक्ते सुखतत्साधनभिन्नेऽपि तत्त्वज्ञाने प्रवृत्तिरुपपन्नेत्युक्तमयुक्तम्, व्याप्तेरसन्ताभावान्योन्याभावघटनभेदेन नानाविधतया तज्ज्ञानानां प्रत्येकमिच्छाप्रवृत्त्यादिहेतुत्वे परस्परं व्यभिचारेणाऽव्यवहितोत्तरत्वस्य कार्यतावच्छेदकशरीरे निवेशावश्यकतया गुरुभूतकार्यकारणभावबाहुल्यापत्तेरिति,

तन्न, परमसिद्धान्तव्याप्तेरेकरूपत्वेन तत्र नानात्वं स्वीकृत्य दोषोक्त्यनुपपत्तेः ।

न च दुःखादौ सुखव्याप्यत्वज्ञानेऽपि तत्रेच्छानुत्पत्त्या वायुसंयोगादौ चन्दनसंयोगादिजन्यसुखव्याप्यताज्ञानेऽपि तत्रेच्छानुत्पत्त्या सुखव्याप्यत्वं नेच्छादिविषयत्वप्रयोजकमिति शङ्क्यम्,

दुःखादावतिशयितसुखव्याप्यत्वज्ञाने वायुसंयोगे सुखव्याप्यत्वज्ञाने चेच्छादेः सर्वानुभवसिद्धत्वात् ।

यत्तु अभिव्यज्यमानात्मसुखव्याप्यत्वस्योदासीनपदार्थसाधारण्येन, तत्त्वज्ञान एव मुमुक्षूणां नियमेन इच्छाद्यनुपपत्तिरिति,

तन्न, उदासीनपदार्थस्य न तत्त्वेनाऽभिव्यज्यमानात्मसुखव्याप्यता, व्यभिचारात्, तत्त्वज्ञानकालीनत्वेन व्याप्यताज्ञाने च तत्त्वज्ञान एव व्याप्यताविश्रान्तेः, तस्य व्याप्यतां विना तत्कालीनस्य व्याप्यत्वाग्रहात्, तत्कालीनत्वविशिष्टोदासीनपदार्थत्वस्य गुरुत्वेन तेन रूपेण तत्र व्याप्यत्वप्रमानुत्पत्तेः ।

यत्तु—

'विपदः सन्तु नस्तात ! तत्र तत्र जगद्गुरो !
भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम्—'

इतिश्रीमद्भागवतस्थकुन्तीवाक्येन विपदोऽपि स्वकीयाः श्रीकृष्णभगवद्दर्शनव्याप्यतया कुन्त्या कामिता इति न बोध्यते, किन्तु तासां भगवद्दर्शनहेतुभूतं यद्भगवत्सांनिध्यं तद्धेतुभूतभगवत्स्मरणहेतुतया परम्परया सुखप्रयोजकत्वं बोध्यत इति,

तन्न, विपत्कालार्थक'तत्र तत्र'इतिपदाभ्यां विपदो निरतिशयसुखात्मकभगवद्दर्शनव्याप्यताया एव स्वरसगत्या अवगमात् ।

अत एव बौद्धाधिकारे 'मोक्षः पुनरात्यन्तिकदुःखनिवृत्तिः'-इत्युक्त्वा 'काम्यश्च दुःखाभावः, दुःखस्य स्वतो हेयत्वात् । सुखाय तथाऽयमिति चेन्न, दुःखाभावस्य सुखाहेतुत्वात् । अथ सुखव्याप्यत्वात् स तथेति चेन्न, तस्य तदव्याप्यत्वात्—'इत्युक्तमुदयनाचार्यैः । तस्मिन् ग्रन्थे सुखव्याप्यत्वं काम्यत्वप्रयोजकमित्युक्तम्, अन्यथा 'अथ—'इत्यादिशङ्कानुपपत्तेः ।

यत्तु उक्तबौद्धाधिकारवाक्यगतसुखव्याप्यत्वपदस्य सुखप्रयोजकत्वपरत्वमिति,

तन्न, लक्षणापत्तेः ।

एवं ज्ञानत्वव्याप्यधर्मावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगित्वं ज्ञाननिवर्त्यत्वम् । उत्तरज्ञाननिवर्त्यपूर्वज्ञाने न सिद्धसाधनं, उत्तरज्ञाननिष्ठपूर्वज्ञाननाशकताया विभुविशेषगुणत्वरूपज्ञानत्वव्यापकधर्मावच्छिन्नतया तद्व्याप्यधर्मावच्छिन्नत्वाभावात् । ज्ञानत्वव्याप्यस्मृतित्वावच्छिन्ननाश्यसंस्कारेऽपि न सिद्धसाधनं, स्मृतेः संस्कारदार्ढ्यजनकत्वेन तन्नाशकत्वाभावात् । न च स्मृतिधारापत्तिः, उद्बोधकाभावेन तदनापत्तेः । यदनन्तरं स्मृतिर्जायते, तस्यैव तदुद्बोधकत्वात् ।

यत्तु उद्बोधकस्य विशिष्य स्मृतिहेतुत्वे अनुभवस्याऽपि स्मृत्यहेतुत्वापत्तिरिति,

तन्न, 'घटानुभवात् मम घटस्य स्मरणं जातं, न पटस्य, तदननुभवात्' इति सार्वलौकिकप्रत्यक्षप्रमाणेनाऽनुभवस्य तद्धेतुत्वावगतेः प्रमाणसिद्धस्याऽपलापितुमशक्यत्वात् ।

न च चरमस्मृतिव्यक्तेः चरमसंस्कारनाशकताऽऽवश्यकीति शङ्क्यम्,

कालविशेषस्य रोगविशेषस्य वा संस्कारनाशकतया चरमस्मृतेस्तदनाशकत्वात्, स्मृतौ हि जातायां संस्कारो दृढो भवतीतिसार्वजनीनानुभवविरोधापत्त्या चरमस्याऽपि स्मरणस्य संस्कारवर्धकस्य नाशकत्वायोगात्, गौडब्रह्मानन्दान्ताद्वैतिभिः चरमस्मृतेः संस्कारनाशकत्वानुक्तेश्च ।

एवमधिष्ठानसाक्षात्कारत्वावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगित्वं ज्ञाननिवर्त्यत्वम् । उत्तरज्ञानस्य स्मृतेश्च न साक्षात्कारत्वेन पूर्वज्ञानसंस्कारनाशकत्वमिति न पूर्वज्ञानसंस्कारयोः सिद्धसाधनम् । साक्षात्कारत्वं च विषयसंसृष्टवृत्तित्व—विषयाभिव्यक्तचित्त्वान्यतरवत्त्वम् । अनुमित्यादिवृत्तयस्तु विषयासंसृष्टाः, वह्नौ अनुमेये द्वाराभावेनाऽन्तःकरणस्याऽसंसर्गात् । प्रत्यक्षस्थले तु इन्द्रियादिद्वारा मनसो विषयसम्बन्धः, 'तत्त्वमसि' इत्यादिशाब्दापरोक्षे च ब्रह्मण्यन्तःकरणस्य तद्विशिष्टप्रमात्राऽभेदद्वारा संसर्गोऽस्त्येव । सुखस्थले वृत्त्यभावात् सुखाभिव्यक्तचित एव सुखप्रत्यक्षत्वात् प्रत्यक्षलक्षणे विषयाभिव्यक्तचित्त्वस्याऽपि निवेशः । न च परोक्षप्रमानिवर्त्यपरोक्षप्रातिभासिके दृश्यत्वस्य साक्षात्कारत्वावच्छिन्नत्वघटितसाध्यव्यभिचार इति वाच्यम् । उक्तज्ञाननिवर्त्यत्वयोग्यत्वस्यैव ज्ञाननिवर्त्यत्वरूपत्वेना-

ऽव्यभिचारात्, एतत्परिष्कारस्य परोक्षप्रातिभासिकानङ्गीकर्तृप्राचीनाद्वैतिमताभिप्रायकत्वाच्च । साक्षात्कारत्वावच्छिन्नजनकतानिरूपितजन्यता च नाशत्वावच्छिन्नाऽभावत्वावच्छिन्ना वा ग्राह्या । अन्यथा उपादानप्रत्यक्षजन्यप्रवृत्त्यात्मकप्रवृत्तिप्रागभावध्वंसस्य प्रतियोगिनि प्रवृत्तिप्रागभावे सिद्धसाधनापत्तेः । प्रवृत्तित्वेन प्रवृत्ति प्रत्येवोपादानप्रत्यक्षस्य हेतुत्वाच्च नाऽयं दोषः ।

यत्तु ब्रह्मसाक्षात्कारेण प्रपञ्चस्य केनचिद्रूपेण नाशेऽपि रूपान्तरेणाऽवस्थानापत्त्या उक्तमिथ्यात्वं न ब्रह्मज्ञानानन्तरं प्रपञ्चाननुवृत्तिपर्यवसायीति,

तन्न, 'विद्वान् नामरूपाद्विमुक्तः,' 'विश्वमायानिवृत्तिः,' 'तरति शोकमात्मवित्,' 'दृश्यं नाऽस्तीति बोधेन मनसो दृश्यमार्जनम्—'इत्यादिश्रुतिषु नामरूपत्व-मायात्व-शोकत्व-दृश्यत्वानां ज्ञानजन्यध्वंसप्रतियोगितावच्छेदकत्वावगाहिबोधजननेन त्वदुक्तरूपान्तरस्य कस्यचित् ज्ञानजन्यध्वंसप्रतियोगितानवच्छेदकत्वस्वीकारस्य उदाहृतश्रुतिविरुद्धत्वादित्यलम् ।

एतेन न्यायभास्करे तृतीयमिथ्यात्वे यद्विट्ठलमिश्रोक्तं स्वबुद्ध्या कल्पितमद्वैतमतपरिष्करणमिव लिखित्वा तदुपरि किञ्चिल्लिखितं, तत्सर्वमपास्तम्, गौडब्रह्मानन्दान्ताद्वैसनुक्तोपालम्भनत्वात्, वङ्गीयतर्कशब्दव्यतिरेकेण समीचीनयुक्त्यलेखनाच्च ।

इति न्यायभास्करखण्डने तृतीयमिथ्यात्वसमर्थनं समाप्तम् ।

स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वम् । तच्च स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वम् । प्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वं प्रतियोगितायां निवेशनीयम् । अन्यथा संयोगेन घटवति समवायेन तदभावमादाय सिद्धसाधनापत्तेः । अत्र प्रपञ्चस्याऽवृत्तित्वमादायाऽर्थान्तरादि-

कं द्वितीयमिथ्यात्वविचार एव परिहृतम् । न च घटवति घट-तदभावयोः एकदा सत्त्वे घटप्रत्यक्षकाले तदभावप्रत्यक्षापत्तिः, अनादिदृढवासनासहितस्य कपालादौ घटादिप्रत्यक्षप्रतिबन्धकदोषासहितस्य घटाद्यधिष्ठानगतसत्त्वारोपस्य, तज्जन्योद्बुद्धसंस्कारस्य वा प्रतिबन्धकत्वात् । अत एव घटादिप्रत्यक्षविरोधिदोषकाले उक्तसत्त्वारोपस्याऽप्रतिबन्धकत्वात् घटाभावप्रत्यक्षभ्रमः ।

यत्तु 'कपालं घटवत्'इतिप्रत्ययस्थले व्यावहारिकस्य पारमार्थिकस्य वा घटाभावस्य प्रत्यक्षापादनमेव न सम्भवति, सामग्र्यभावात्, तत्र प्रतिबन्धककल्पनं निष्प्रयोजनकमिति,

तन्न, घट इव तदभावेऽपि व्यावहारिके पारमार्थिके च सन्निकर्षादिघटितसामग्र्याः सत्त्वात् ।

यत्तु घटवत्कपाले व्यावहारिकघटाभावविषयकयोरनुमितिशाब्दबोधयोः प्रमात्वव्यवहारस्येष्टत्वे प्रत्यक्षेऽपीष्टापत्तिसम्भवेन प्रतिबन्धककल्पनं व्यर्थमिति,

तन्न, प्रतिबन्धकस्याऽभावप्रत्यक्षप्रमात्वव्यवहारवारणार्थमकल्पनात्, व्यावहारिकाभावप्रत्यक्षापत्तिवारणार्थमेव तत्कल्पनात् ।

न च प्रतियोग्यभावयोरेकाधिकरणावृत्तित्वं शङ्क्यम्,

काले सहसम्भववद्देशेऽपि सहसम्भवस्याऽविरोधात् ।

न च कालेऽप्यवच्छेदकभेदेनैव प्रतियोगिमत्यभाव इति शङ्क्यम्,

किञ्चित्कालावच्छेदेन देशे, किञ्चिद्देशावच्छेदेन काले चाऽभाववृत्तौ देशकालाद्यनन्तावच्छेदकानामभावं प्रति कल्पने गौरवात् अनवच्छिन्नस्यैव घटाद्यभावस्य सर्वत्र कल्पनात् । इदानीं गेहे नाऽस्तीति धीः गृहादिनिष्ठाधिकरणतावच्छेदकत्वाभावं काले विषयीकरोति, न तु गृहादिनिष्ठघटाभावावच्छेदकत्वं काले ।

ननु भावाभावाविरोधवादिनां घटाधिकरणतावच्छेदकत्वमपि न प्रसिद्ध्यति, विरोधभञ्जनार्थमेवाऽवच्छेदकस्वीकारादिति चेत्,

न, न हि विरोधभञ्जनार्थमवच्छेदकस्वीकारः, किन्तु प्रतीतिबलात्, 'इदानीं गेहे घटोऽस्ति' इति हि प्रतीतिरवच्छेदकत्वावगाहिनी सार्वजनीना 'इदानीं गेहे घटो नाऽस्ति' इतिप्रतीतिवत् न काले अवच्छेदकत्वमनवगाह्योपपद्यते, 'इदानीं गेहे घटो नाऽस्ति' इतिप्रतीत्यनुरोधेन 'इदानीं गेहे घटाभावः' इति प्रतीतेरपि 'घटमहं न जानामि, मयि घटज्ञानं नाऽस्ति' इति प्रतीतेः 'अहं घटाज्ञः' इतिप्रतीत्यनुरोधेन भावरूपाज्ञानविषयकत्ववत् घटाधिकरणतावच्छेदकत्वाभावविषयकत्वमेव । अन्यथा 'इदानीं गेहे घटाभावः'-इतिप्रतीत्यनुरोधेनाऽभावं प्रत्यपि कालादेरवच्छेदकत्वाङ्गीकारे कालदेशगतानन्तावच्छेदकत्वव्यक्तीनां कल्पनापत्तेः । न चाऽभावनिरूपितावच्छेदकत्वास्वीकारे कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वघटितकारणत्वानिर्वाहः शङ्क्यः, स्वसामानाधिकरण्यावच्छेदकघटत्वादिमत्त्वरूपघटादिनिष्ठव्याप्तिनिरूपकत्वघटितकारणत्वस्याऽभावावच्छेदकत्वाघटितस्य सम्भवात्, यदाऽतिप्रसक्तस्याऽपि घटत्वस्य भूतलाधेयतावच्छेदकत्वं स्वीक्रियते, तदा घटत्वादिकं दण्डादिसामानाधिकरण्यानतिप्रसक्तं तदवच्छेदकमित्यत्र किमु वक्तव्यम् ? मीमांसकाङ्गीकृताखण्डोपाधिरूपकारणत्वग्रहं प्रति नियतान्वयव्यतिरेकज्ञानस्याऽनुभवसिद्धहेतुत्ववत्, व्यतिरेकव्यभिचारज्ञानस्य कामिनीजिज्ञासावत् अनुभवानुरोधेन प्रतिबन्धकत्ववच्च अभावावच्छेदकत्वाद्यघटितास्मदुक्तकारणत्वग्रहं प्रत्यपि तयोर्हेतुत्वप्रतिबन्धकत्वयोः सम्भवो न विरुद्धः ।

एतेन चतुर्थमिथ्यात्वे न्यायभास्करे घटत्वावच्छिन्नप्रका-

रता स्वव्यापकाभावप्रतियोगितावच्छेदकावच्छिन्नत्व—स्वनिरूपितत्वोभयसम्बन्धेन विशेष्यताविशिष्टा, दृश्यनिष्ठप्रकारतात्वात्, इदं रजतमितिज्ञानीयरजतप्रकारतावदिति प्रातिभासिकाभ्युपगमे अनुमानं, प्रपञ्चः स्वाधिकरणावृत्तित्व—वृत्तित्वोभयाभाववदभावप्रतियोगी, दृश्यत्वात्, गगनाभाववदिति प्रातिभासिकानभ्युपगमे अनुमानं, अव्याप्यवृत्त्यभावाप्रतियोगी प्रपञ्चः स्वसमानाधिकरणाभावप्रतियोगी, दृश्यत्वात्, संयोगवदिति प्रतिभासिकानभ्युपगमे अनुमानं च लिखित्वा तदुपरि यत्किञ्चिल्लिखितं तत्सर्वमपास्तम्,

उक्तानुमानत्रयस्य सिद्धिब्रह्मानन्दीययोः चतुर्थमिथ्यात्वप्रकरणे अलिखितत्वात् ।

किं चोक्तानुमानत्रयमपि निर्दुष्टमेव । प्रथमानुमाने घटपटादिप्रपञ्चप्रमीयप्रकारतायामुक्तसाध्यस्य सत्त्वेऽपि अवच्छेदकावच्छेदेनाऽनुमितौ सिद्धसाधनाभावात्, घटादिप्रमीयप्रकारतायां उक्तसाध्यासिद्धेः । अत एव घटत्वादि पक्षीकृत्य पर्वतह्रदौ वह्निमन्ताविति ज्ञानीयप्रकारतायाः पर्वतह्रदोभयनिष्ठविभिन्नविशेष्यतानिरूपितत्वेन उक्तोभयसम्बन्धेन ह्रदनिष्ठविशेष्यताविशिष्टत्वेऽपि यथा न वह्नेर्मिथ्यात्वं, तथा प्रपञ्चेऽपीत्यर्थान्तरानवकाशः । द्वितीयानुमाने अवृत्त्यभावप्रतियोगित्वमादायाऽर्थान्तरवारणायाऽवृत्त्यभावाप्रतियोगित्वं पक्षविशेषणं देयम् । अभावत्वविशिष्टरूपं तु नाऽधिकरणस्वरूपमिति द्वितीयमिथ्यात्वे लघुचन्द्रिकायामुक्तं, तेन नाऽवृत्तिगगननिष्ठप्रपञ्चाभावस्याऽवृत्तित्वात्तत्प्रतियोगिनि प्रपञ्चे आश्रयासिद्धिः । तृतीयानुमाने प्रलयाद्यवच्छेदेन वर्तमानस्य कालिकसम्बन्धावच्छिन्नप्रपञ्चाभावस्याऽवच्छिन्नवृत्तिकत्वेन तत्प्रतियोगिन्यपि प्रपञ्चे नाऽऽश्रयासिद्धिः, प्रलये सूक्ष्मरूपेण

प्रपञ्चस्य सत्त्वात्, प्रपञ्चत्वेन तत्र प्रपञ्चाभावाभावात् । मिथ्यात्वघटकाभावस्तृतीयानुमाने व्यवहारिको न, किन्तु पारमार्थिकः, तेन व्यावहारिकस्याऽभावस्य मिथ्यात्वघटकस्य प्रतियोग्यवच्छेदककालावच्छिन्नत्वेन तत्प्रतियोगिनि प्रपञ्चे अवच्छिन्नवृत्तिकाभावप्रतियोगित्वसत्त्वात् आश्रयासिद्धिर्न शङ्क्या ।

इति न्यायभास्करखण्डने चतुर्थमिथ्यात्वसमर्थनम् ।

सद्विविक्तत्वं मिथ्यात्वम् । तच्च दोषाजन्यधीविषयान्यत्वम् । तुच्छे धीविषयत्वाभावेन उक्तलक्षणस्य, शुद्धस्य वृत्तिविषयत्वाभावपक्षे शुद्धे चाऽतिव्याप्तिवारणाय सत्प्रतियोगिकत्वविशिष्टतादात्म्यं विशेषण देयम् ।

न च ब्रह्मणो वृत्तिविषयत्वाभावपक्षे प्रपञ्चवृत्तिवत् वृत्त्युपहितब्रह्मविषयकवृत्तेरपि बाधितविषयकत्वेन भ्रमतया धीवृत्तिसामान्यस्य दोषजन्यत्वेन दोषाजन्यधीवृत्तिविषयस्याऽप्रसिद्ध्योक्तमिथ्यात्वाप्रसिद्धिः शङ्क्या,

अद्वैतिभिरसत्ख्यात्यनङ्गीकारेऽपि असत्ख्यात्यङ्गीकर्तृरीत्या सत्त्वेन प्रतीत्यर्हत्वस्याऽसद्वारणाय निवेशवत् 'शुद्धस्य वृत्तिविषयत्वं नाऽस्ति' इति वदद्भिर्वाचस्पतिपक्षानुयायिभिरपि 'भ्रमजनकाजन्यधीविषयं ब्रह्म' इतिवादिमतमनुसृत्य प्रतियोगिप्रसिद्ध्युपपादनस्य कर्तुं शक्यत्वात् ।

एवं भ्रमविषयत्वं, अविनाश्यवृत्तिधर्मवत्त्वं वा सद्विविक्तत्वम् । न च सर्वस्याऽपि क्षणिकत्वादिप्रकारकभ्रमविषयत्वेन सिद्धसाधनं शक्यं वक्तुम्, अविद्यावृत्तिरूपभ्रमाविषयत्वस्याऽद्वैतिभिन्नेनाऽस्वीकृततया तस्यैव प्रकृते साध्यघटकतया सिद्धसाधनाभावात् ।

न च विनाशित्वमेवाऽलं, किमविनाश्यवृत्तिधर्मवत्त्वनिवेशेनेति शङ्क्यम्,

तुच्छप्रपञ्चसाधारणरूपस्य सद्विविक्तत्वस्य परिष्कृतं रूपं उभयसाधारणमेव भवितुमर्हति, विनाशित्वमात्रस्योभयसाधारण्यं नाऽस्ति, अविनाश्यवृत्तिधर्मवत्त्वस्य तु अस्तीति कृत्वा तथोक्तेः । विनाशित्वमेव मिथ्यात्वमिति पर्यवसानं तु इष्टमेवाऽद्वैतिनाम् ।

एतेन न्यायभास्करे पञ्चममिथ्यात्वे यद्यत्स्वकपोलकल्पितं जल्पितं, तत्सर्वं निरस्तम्, गौडब्रह्मानन्दान्तानुक्तोपालम्भनत्वात् ।

इति न्यायभास्करखण्डने पञ्चममिथ्यात्वसमर्थनम् ।

ननु मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्त्वापत्तिः । प्रपञ्चः सत्यः, मिथ्याभूतमिथ्यात्वकत्वात्, आत्मवदित्यापत्तिपर्यवसानात्, मिथ्यात्वस्य सत्यत्वे ब्रह्मैव सत्यमिति सिद्धान्तहानिरिति चेन्न । आत्मत्वस्योपाधित्वात् । न च सत्यत्वमस्तु, आत्मत्वं माऽस्त्विति सप्रयोजकत्वाशङ्कायां वारकाभावः शङ्क्यः, 'सत्यं ज्ञानमनन्तं' इति श्रुतौ सत्यत्वस्य ब्रह्मलक्षणत्वोक्तेरेव वारकतर्करूपायाः सत्त्वात् । न हि सत्यत्वस्य जगत्साधारण्ये ब्रह्मलक्षणत्वं सम्भवति । रामानुजभाष्येऽपि भूमाधिकरणे 'एष तु वा अतिवदति यः सत्येनाऽतिवदति, इत्यत्र 'सत्य'शब्दस्य ब्रह्मणि मुख्यत्वमाश्रित्य तद्बलेन भूम्नो ब्रह्मत्वं निर्धारितम् । अत एव प्रपञ्चस्येव तद्गतमिथ्यात्वस्याऽपि मिथ्यात्वमावश्यकम्, अन्यथा प्रपञ्चमिथ्यात्वयोः सत्यत्वे सत्यत्वस्य ब्रह्मलक्षणत्वश्रुतिविरोधापत्तिः । अत एव च्छान्दोग्ये सत्पदस्य ब्रह्मासाधारणत्वं सिद्धं कृत्वा 'सदेव सोम्य'इति वाक्ये सत्पदेन ब्रह्मग्रहणम्, 'असम्भवस्तु सतोऽनुपपत्तेः'इति सूत्रेऽपि । यदि प्रपञ्चस्य तद्गतमिथ्या-

त्वस्य च सत्त्वं स्वाभाविकं स्यात्, कथं श्रुतिसूत्रयोः निरुपचरितसत्पदेन ब्रह्मनिर्देश उपपद्येत ?

किं च ययोर्विरुद्धयोरेकमेव मिथ्या, न द्वयं, तयोरेकापेक्षया अपरमधिकसत्ताकमिति नियमः, प्रपञ्चगतमिथ्यात्वस्य मिथ्यात्वेऽपि न तद्गतसत्यत्वस्य मिथ्यात्वापेक्षया अधिकसत्ताकत्वं, प्रपञ्चवत् प्रपञ्चगतसत्यत्वमिथ्यात्वयोरुभयोरपि सत्यत्वस्य ब्रह्मलक्षणत्वादिश्रुत्याद्यनुरोधेन मिथ्यात्वावगतेः । यदि 'मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत्, तदा एकमिथ्यात्वे अपरसत्यत्वम्—' इत्यद्वैतिग्रन्थस्य ययोर्विरुद्धयोरेकमेव मिथ्या, न द्वयं, तयोरेकापेक्षया अपरमधिकसत्ताकमित्यर्थ एव तात्पर्यम् ।

यत्तु रजतभिन्नत्व-रजतत्वयोः परस्परविरहव्यापकत्वोक्तिरयुक्ता, रजतभेदाभावस्य प्रतियोगितावच्छेदकस्वरूपतया रजतभिन्नत्व—रजतत्वयोरपि परस्परविरहरूपत्वादिति,

तन्न, रजतत्वस्य रजतभिन्नत्वाभावरूपत्वेऽपि रजतभिन्नत्वस्य रजतत्वात्यन्ताभावरूपत्वासम्भवेन परस्परविरहरूपत्वासम्भवात्, अन्यथा भेदात्यन्ताभावयोरेकत्वापत्तेः । उक्तनियमे 'विरुद्धयोः' इत्यस्य सहानवस्थानरूपं यत् विरुद्धतावच्छेदकं तद्वतोरित्यर्थः । विरुद्धतावच्छेदकव्यावहारिकगोत्वाश्वत्ववृत्तिगोत्वत्वाश्वत्वत्वयोः यथाक्रमं एकगजारोपितगोत्वाश्वत्ववृत्तित्वेन सहावस्थितयोरपि गजारोपितगोत्वाश्वत्वयोर्विरुद्धत्व न विरुध्यते ।

यत्तु लघुचन्द्रिकायां सत्यत्व-मिथ्यात्वयोः परस्पराभावत्वनिवृत्त्यर्थं सत्यत्वमिथ्यात्वयोस्तुच्छे प्रत्येकासत्त्वकथनमयुक्तम्, तुच्छास्वीकर्तृमते मिथ्यात्व—सत्यत्वयोः प्रत्येकासत्त्वविरहेण तयोः परस्परविरहरूपत्वसम्भवात्, तत्स्वीकारेऽपि विशेषाभावातिरिक्तसामान्याभावास्वीकर्तॄणां भवतां मते उभया-

भावस्य प्रत्येकाभावानतिरिक्ततया सदसद्विलक्षणत्वरूपसत्त्वाभावासत्त्वाभावलक्षणमिथ्यात्वाभावस्य सत्यत्वे प्रतिक्षेप्तुमशक्यत्वात् 'मिथ्यात्वाभावः सत्यत्वं'इतिमूलविरोधाच्चेति,

तन्न, अस्य लघुचन्द्रिकाग्रन्थस्य तुच्छस्वीकर्तॄन् प्रति प्रवृत्ततया तन्मते विशेषाभावानिरिक्तसामान्याभावस्वीकारात् तन्मतभङ्गार्थं तद्रीत्या सामान्याभावस्य स्वीकृतत्वात् 'मिथ्यात्वाभावः सत्यत्वं'इति मूलस्य प्रस्थानान्तरत्वात् ।

किं च सत्यत्व-मिथ्यात्वयोः परस्परविरहत्वेऽपि भिन्नसत्ताकत्वान्न विरोधः, व्यावहारिकमिथ्यात्वज्ञानेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारादिति पक्षं लिखित्वा तत्पक्षः उत्तराद्वैतसिद्धिवाक्यावतारिकारूपेण 'ननु प्रपञ्चे मिथ्यात्वाज्ञानं-'इत्यादिना दूषितः, तदेव दूषणमनन्ताचार्येण स्वबुद्ध्या रचितामिव कृत्वा लिखितम् । प्रायेण तस्य सिद्धिब्रह्मानन्दीयविठ्ठलमिश्रीयग्रन्थेषु लिखितदूषणानामेव तल्लिखितदोषपरिहारलेखनमनुद्धाट्य लेखनात् ईदृशलेखनमेव तस्य स्वभावः !

यत्तु सत्यत्वमिथ्यात्वयोः समसत्ताकत्वेऽपि संयोग-तदभावयोरिवाऽविरोध इत्युक्तमयुक्तम्, संयोग-तदभावयोरेकावच्छेदेनाऽवृत्तित्वरूपविरोधसत्त्वात्, समसत्ताकयोरविरोधे भामत्यां भेदाभेदयोर्विरोधभङ्गार्थं तयोर्भिन्नसत्तास्वीकारविरोधाच्चेति,

तन्न, नैयायिकमते निरवयवयोः परमाण्वोः संयोगस्याऽवच्छेदकावयवाभावेऽपि अव्याप्यवृत्तित्वेनाऽविरोधस्वीकारात् । भामतीग्रन्थस्तु सम्भवाभिप्रायः, 'भावाभावयोः स्वप्नवत् अविरोध इत्युक्तमेवेति भावः'इति लघुचन्द्रिकायां भामतीग्रन्थाभिप्रायस्य वर्णितत्वात् ।

किं च मिथ्यात्वस्य सत्यत्वमिथ्यात्वाभ्यां दूषणे नित्यसमा

जातिः स्यात्,

'धर्मस्य तदतद्रूपकल्पनानुपपत्तितः ।

धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमा भवेत्—'

इत्युदयनोक्तेः । विकल्पितकोट्योरेकस्याऽद्वैतहानिप्रयोजकत्वेऽपि अन्यस्य मिथ्यात्वकोटेः प्रपञ्चसत्यत्वतात्त्विकत्वापत्तिद्वारा प्रपञ्चे धर्मिणि मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वात् प्रकृते कारिकोक्तलक्षणमविरुद्धम् । कोटिद्वयस्य तद्वैशिष्ट्यभङ्गप्रयोजकत्वविवक्षायामपि सत्यत्वकोटेरपि मिथ्यात्वगतधर्मस्य प्रपञ्चान्तर्गतत्वेन प्रपञ्चरूपे मिथ्यात्वे मिथ्यात्वधर्मित्वेन तस्मिन् सत्यत्वे मिथ्यात्वप्रपञ्चे मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वमविरुद्धम् । न च तात्त्विकसत्यत्वस्य मिथ्याभूतमिथ्यात्वं प्रत्यविरुद्धत्वेन तात्त्विकसत्यत्वापत्तिद्वाराऽपि तद्वैशिष्ट्यभङ्गप्रयोजकत्वाभावः शङ्क्यः, शुक्तित्वस्य प्रातिभासिकशुक्तिरूप्याधिकसत्ताकत्वेऽपि प्रातिभासिकरूप्यप्रयोजकाज्ञानविषयत्वेन शुक्तिरूप्यभङ्गप्रयोजकत्ववत् तात्त्विकसत्यत्वस्य मिथ्याभूतमिथ्यात्वाधिकसत्ताकत्वेऽपि मिथ्याभूतमिथ्यात्वभङ्गप्रयोजकत्वसम्भवात् 'वियन्मिथ्या—'इतिविशेषानुमानवत् 'मिथ्यात्वं मिथ्या—' इति विशेषानुमानस्य सिद्धान्त्यभिमततया मिथ्यात्वस्याऽपि मिथ्यात्वधर्मित्वसम्भवेन मिथ्यात्वस्य सत्यत्वे धर्मिणि मिथ्यात्वे मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वमविरुद्धम्, सामान्यानुमाने तु सुतरामित्यलम् ।

एतेन यदन्यत् न्यायभास्करे मिथ्यात्वमिथ्यात्वे लिखितं, तत्सर्वमपास्तम्, अनुक्तोपालम्भनत्वात्, आभासत्वाच्च ।

इति न्यायभास्करखण्डने मिथ्यात्वमिथ्यात्वसमर्थनं समाप्तम्।

हेतुभूतं दृश्यत्वं वाचस्पतिपक्षे वृत्तिविषयत्वमेव, शुद्धस्य

तन्मते वृत्तिविषयत्वाभावात् न तत्र व्यभिचारः । अज्ञानतत्कार्यनिवृत्तिप्रयोजकाखण्डाकारवृत्तिरपि तत्त्वमस्यादिवाक्यप्रयोज्या वृत्तिरूपस्वोपहितमेव विषयीकरोति, न शुद्धं, तस्य 'यत्तद्द्रेश्यम्—'इत्यादिना वृत्तिरूपदृग्विषयत्वानिषेधात । नाऽप्यखण्डाकारवृत्त्यन्यशरीरान्तःकरणसुखाद्युपहितं चैतन्यं विषयीकरोति, उक्तवृत्तेः स्वेतरसर्वदृश्यनिवृत्तित्वेन स्वेतरोपाधेस्तदाऽसम्भवात, शरीरादेरुपाधित्वे तदुपहितस्य वृत्तिविषयत्वे तस्याऽपि अविद्या—तत्कार्यान्यतरस्याऽखण्डाकारवृत्तिविषयत्वापत्त्या अखण्डाकारवृत्तेरविद्याद्यनिवर्त्तकत्वापत्तेः, अविद्यातत्कार्याविषयकस्याऽविद्यादिनिवर्तकत्वात , वृत्त्युपहितस्य विषयत्वे तु स्वस्य स्वविषयत्वाभावेनाऽविद्याकार्यस्याऽपि वृत्तेस्तदविषयत्वात् अविद्यादिनिवर्तकत्वोपपत्तिः । अत एव लघुचन्द्रिकायां 'उपाध्यविषयकत्वे सत्युपहितविषयकस्यैवाऽज्ञाननिवर्तकत्वम्'इत्युक्तम् । 'उपाध्यविषयकत्वस्य'इत्यस्याऽज्ञानतत्कार्याविषयकत्वस्येत्यर्थः । तुच्छाकारकधियोऽविद्यातत्कार्याविषयकत्वेन सत्यन्तसत्त्वात् उपहितविषयकत्वं विशेष्यम् ।

न च तुच्छवृत्तेर्धीत्वाभावः शङ्क्यः,

'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते'इतिसूत्रभाष्यस्थप्रथमपक्षरीत्या विपर्ययवत् विकल्पस्याऽपि मनोवृत्तिविशेषत्वरूपधीत्वस्याऽपि तत्पक्षाभिमानिभिः स्वीकृतत्वात । अखण्डाकारवृत्त्युपहितचैतन्येतराज्ञानतत्कार्याविषयकोपहितविषयकवृत्तेः, अज्ञानस्य चाऽज्ञानतत्कार्याविषयकत्वसमानाधिकरणचैतन्यविषयकत्वेन समानविषयत्वात् निवर्त्यनिवर्तकभावोपपत्तिः । 'शुद्धं स्वप्रकाशम्'इति वाक्यमनुपहितत्वरूपं शुद्धत्वं अस्वप्रकाशत्वव्यापकीभूताभावप्रतियोगीत्यर्थकम् । तादृशव्यापकत्वज्ञानस्य तदु

उद्बुद्धसंस्कारस्य वा सत्त्वे अनुपहितत्वाद्यवच्छिन्नविशेष्यकस्वप्रकाशत्वाभावप्रकारकज्ञानं न जायते, वह्न्यभावव्यापकीभूताभावप्रतियोगी धूम इति निश्चये उद्बुद्धसंस्कारे वा सति धूमवान् वह्न्यभाववानिति ज्ञानानुत्पत्तिवत्, उक्तबोधहेतुशुद्धादिपदानां शुद्धत्व–स्वप्रकाशत्वाद्युपहित एव शक्तिः, न तु केवलशुद्धे, येन केवलशुद्धस्य ज्ञानाविषयत्वेन तत्र शक्तिज्ञानस्याऽभावे शक्तिज्ञानाधीनं शुद्धत्वं स्वप्रकाशत्वाभावव्यापकाभावप्रतियोगीति लक्षणाज्ञानं न भवेदित्याशङ्क्येत ।

यत्तु उपहितत्वाभावरूपशुद्धत्वस्याऽप्युपाधित्वेन शुद्धत्वव्याघात इत्याशङ्क्य तादृशोपहितत्वाभावस्य ब्रह्मस्वरूपतया समाधानस्याऽद्वैतसिद्धिद्वितीयपरिच्छेदे कृतत्वेन उक्तव्यतिरेकव्याप्तिज्ञाने शुद्धस्याऽवश्यं ज्ञातव्यत्वमागतमिति,

तन्न, तादृशसिद्धिग्रन्थस्य प्रस्थानान्तरत्वेन वाचस्पतिमतपरिष्कारत्वाभावात् ।

यत्तु वह्निर्धूमव्यापक इति ज्ञाने उद्बुद्धसंस्कारे वा सति वह्न्यभाववान् धूमवानिति ज्ञानं न जायते, एवमुपहितत्वमस्वप्रकाशत्वव्यापकमिति ज्ञाने उद्बुद्धसंस्कारे वा सति उपहितत्वाभाववत् अस्वप्रकाशमितिज्ञानप्रतिबन्धसम्भवात् उपहितत्वाभावरूपशुद्धत्वस्याऽज्ञानेऽपि क्षत्यभावात् 'शुद्धं स्वप्रकाशं–'इति वाक्यस्य उपहितत्वमस्वप्रकाशत्वव्यापकमित्यर्थकतोपपद्यत इत्युक्तमयुक्तम्, अस्वप्रकाशत्वस्य स्वप्रकाशत्वघटितत्वेन स्वप्रकाशत्वस्य च शुद्धस्वरूपत्वे शुद्धस्य दृश्याविषयत्वे निरुक्तव्याप्तिज्ञानस्याऽसम्भवादिति,

तन्न, शुद्धत्वस्वप्रकाशत्वादीनां शुद्धस्वरूपत्वस्वीकारस्य प्रस्थानान्तरत्वात्, वाचस्पतिमते तथाऽनङ्गीकारात् ।

यत्तु अनुपहितत्वे स्वप्रकाशत्वव्यापकत्वज्ञानार्थं शुद्धत्वस्वप्रकाशत्वयोः सहचारज्ञानावश्यकतया शुद्धज्ञाने तयोः सहचारज्ञानं न सम्भवतीति,

तन्न, एतद्रूपवानेतद्रसादित्यादौ एतद्रूपवत्त्वैतद्रसवत्त्वयोः पक्षभिन्नावृत्तित्वेन सहचारज्ञानाभावेऽपि व्याप्तिनिश्चयसत्त्वात्, भूयःसहचारदर्शनेऽपि व्याप्तिज्ञानानुत्पत्तेः, पार्थिवत्वलोहलेख्यत्वयोः हीरकादौ व्यभिचारात, तत्र व्याप्तिनिश्चयसम्पादनवत् वाचस्पतिमते प्रकृतेऽप्युपपत्तेः ।

यत्तु सत्यत्ववादिमतरीत्या ब्रह्मणि व्यभिचार इति,

तन्न, घटस्येव सत्यत्ववाद्यभिहितब्रह्मणोऽपि मिथ्यात्वस्य प्रसाध्यत्वेनाऽव्यभिचारात् ।

विवरणपक्षे तु शुद्धे अज्ञानविषयत्वोपहितचित्तादात्म्यवृत्तिविषयत्वादीनां धर्माणां व्यावहारिकाणां स्वीकारः, अज्ञानतत्प्रयुक्तोपहितचैतन्यस्याऽज्ञानाधीनसिद्धिकस्याऽज्ञानविषयत्वानुपपत्त्या उपहितचैतन्यस्य शुद्धतादात्म्याभावे ब्रह्मास्मीतिव्यवहारानुपपत्त्याऽज्ञानादिनिवर्तकवृत्तेरज्ञानतत्कार्यादिविषयकत्वानुपपत्त्या च स्वीकारावश्यकत्वात, निर्धर्मकशास्त्रं तु शुद्धे पारमार्थिकधर्मनिषेधपरमित्यङ्गीकारात । वृत्तिविषयत्वरूपदृश्यत्वस्य शुद्धे व्यभिचारवारणाय शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वं विवक्षितम् । शुद्धत्व तुच्छस्याऽपि शाब्दवृत्तिमात्रविषयत्वात् न तत्र व्यभिचारः, सर्वज्ञत्वादिगुणानां सर्वज्ञत्वादिः ब्रह्मधर्मः, तथाश्रुतिबोध्यत्वादिसनुमानविषयत्वेन शब्दाजन्यवृत्तिविषयत्वाव मिथ्यात्वं निष्प्रत्यूहम् । न चाऽनुभूतिः स्वप्रकाशा, अनुभूतित्वादित्यानुमानिकवृत्तिविषयत्वं शुद्धे शङ्क्यम्, अनुभूतित्वादिधर्मस्य विशिष्टवृत्तेः शुद्धावृत्तितया हेतोः स्वरूपासिद्धेः, जी-

वः शुद्धान्न भिद्यते, चेतनत्वादित्याद्यनुमानं न सम्भवति, उक्तानुमानं विना शब्देनैव जीवब्रह्मभेदसिद्धौ 'तं त्वौपनिषदं,' 'नाऽवेदविन्मनुते,' 'तं बृहन्तं'इत्यादिश्रुतिविरोधापत्त्या च तत्सिद्ध्यर्थमनुमानस्यैतत्पक्षेऽनङ्गीकारात् ।

'सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते—'

इत्यादिकं तु उपहितविषयं, अन्यथा 'तं त्वौपनिषदं'इत्यादिश्रुतिविरोधापत्तेः ।

यत्तु उपहितस्य प्रत्यक्षे भाने स्वरूपस्याऽपि भानमावश्यकं, अन्यथा विशिष्टे निश्चयेऽपि स्वरूपे संशयापत्तेरिति,

तन्न, संशयस्य शाब्दान्यवृत्तित्वेन शुद्धे तदापादनासम्भवात्, अन्यथा 'तं त्वौपनिषदं—'इत्यादिशास्त्रविरोधापत्तिः । विप्रतिपत्तिवाक्यादपि मानससंशयहेतुकोटिद्वयोपस्थितिरेव जायत इत्येतत्पक्षाभिप्रायः ।

यत्तु तुच्छं वृत्तिविषयः, व्यवह्रियमाणत्वादित्यनुमानविषये तुच्छे व्यभिचार इति,

तन्न, उक्तानुमानस्य 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः—'इत्यादिशास्त्रबाधितत्वात् । अत एवाऽऽगमबाधितानुमानस्वीकारे तु न शब्दाजन्यवृत्तिविषयत्वं हेतुरिति मत्वा पक्षान्तरमुक्तं लघुचन्द्रिकायाम् ।

एवं विवरणपक्षे सत्तादात्म्यसत्तादात्म्यत्वान्यतरप्रकारकवृत्तिविषयत्वं दृश्यत्वम् । तुच्छशुद्धयोः विकल्पनिर्विकल्पकवृत्तिविषययोरुक्तहेत्वभावान्न व्यभिचारः । सत्तादात्म्ये सत्तादात्म्यत्वसत्त्वात् तत्राऽपि दृश्यत्वम् । अत एवाऽन्यतरप्रकारकेत्युक्तम् । 'शुद्धं सत्', 'शशविषाणं सत्'इतिप्रतीतिसत्त्वोक्तिः 'माता वन्ध्या'इत्युक्तितुल्या ।

यद्यपि सत्तादात्म्यसत्तादात्म्यत्वान्यतरवत्त्वं हेतुः सम्भवति, तथाऽपि दृश्यत्वशब्दार्थानुगमार्थमन्यतरप्रकारकवृत्तिविषयत्वोक्तिः । सत्ता च 'शुद्धचैतन्यं मायोपहितचैतन्यं तत्तद्विषयावच्छिन्नं चेति त्रिविधम्'इति तत्त्वदीपनोक्ता ग्राह्या ।

एतेन न्यायभास्करे यदपि शुष्कतार्किकरामशास्त्र्याख्याऽर्वाचीनपुरुषनिरुक्तदृश्यत्वप्रकारखण्डने, 'स्वसमानसत्ताकज्ञानविषयत्वमेव दृश्यत्वम्–'इत्यादिकं 'अलं पल्लवितेन'इत्यन्तं, यदपि ''निरवच्छिन्नवृत्तिविषयत्वमेव दृश्यत्वं–'इत्यादि 'दुर्वारं–'इत्यन्तं, 'स्वातिरिक्तविषयकज्ञानाबाध्यवृत्तिविषयत्वं, स्वपदं यस्मिन् दृश्यत्वमुपपादनीयं तत्परं–'इत्यादि, 'सत्यादिपदतात्पर्यविषयाविषयकवृत्तिविषयत्वम्–'इत्यादि, 'अन्योन्याश्रयात्–'इत्यन्तं, तत्सर्वमपास्तम्, ब्रह्मानन्दीयान्तादृैतग्रन्थानुक्तोपालम्भनत्वात् ।

यत्तु फलव्याप्यत्वं दृश्यत्वम् । स्वावच्छिन्नवृत्तिविषयान्यतरप्रतिबिम्बितचैतन्यं फलं, तत्तादात्म्यं दृश्यत्वमित्युक्तमयुक्तं, परोक्षस्थले गुरुत्वादौ वृत्तेर्बहिर्देशगमनाभावेन गुरुत्वावच्छिन्नवृत्तिप्रतिम्बितचैतन्यरूपफलस्याऽभावात् गुरुत्वादौ भागासिद्धेरिति,

तन्न, स्वावच्छिन्नत्वस्य वृत्तौ निवेशात्, गुरुत्वादिपरोक्षेऽपि वृत्तेर्बहिर्गमनाभावेऽपि आन्तरवृत्तौ चितः प्रतिबिम्बाङ्गीकारात् ।

आवरणभङ्गविशिष्टचिद्विषयत्वं फलव्याप्यत्वमिति पक्षेऽपि गुरुत्वादिपरोक्षस्थले गुरुत्वविषयकान्तरवृत्तिप्रतिबिम्बितचिता असत्त्वापादकाज्ञानभङ्गसत्त्वात् तद्विशिष्टचिद्व्याप्यत्वमक्षुण्णम् ।

आवरणभङ्गविशिष्टचितः प्रत्यक्षस्थल एव फलत्वमित्युक्तिरसङ्गता, गुरुत्वादावपि असत्त्वापादकावरणभङ्गविशिष्टचिद्रूपफलसत्त्वात्, चिद्रूपस्याऽऽत्मनः प्रतिबिम्बितत्वं 'रूपं रूपं प्रतिरूपो बभूव' इतिश्रुत्यादिसिद्धं भाष्यसिद्धिब्रह्मानन्दीयग्रन्थस्थयुक्त्यादिसिद्धं च ।

एवं वृत्तिव्याप्यफलव्याप्ययोरन्यतरत्वं दृश्यत्वम् । वृत्तिश्च शब्दाजन्या विवक्षिता । तेन ब्रह्मणि न व्यभिचारः ।

एवं कदाचित् कथञ्चित् चिद्विषयत्वं दृश्यत्वम् । तच्च दैशिकसम्बन्धेनाऽनावृतचिद्विषयत्वम् । न च शुद्धे उक्तचित्तादात्म्यरूपं तद्विषयत्वं शङ्क्यम् । उक्तचित्प्रतियोगिकत्वविशिष्टतादात्म्यस्य शुद्धेऽभावात् । न च प्रातिभासिकं तत् शुद्धेऽपि भवति, स्वसमानसत्ताकचित्तादात्म्यस्य विवक्षितत्वात्, प्रातिभासिकोपादानमूलाज्ञानस्याऽवच्छिन्नचिन्मात्रवृत्तित्वेन शुद्धावृत्त्या शुद्धे प्रातिभासिकचित्तादात्म्यासम्भवाच्च ।

एवं स्वविषयकस्फुरणाद्यन्यतमत्वव्यापकं यत् स्वातिरिक्तसम्विदधीनत्वं, तत्कत्वं दृश्यत्वम् । स्वातिरिक्तचिदधीनस्फुरणकत्वमिति यावत् । न च शुद्धविषयकासत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपस्फुरणस्य शाब्दबोधस्य पदज्ञानरूपचिदपेक्षत्वात् तस्य च पदज्ञानस्य शुद्धब्रह्मभिन्नत्वात् शुद्धे व्यभिचार इति शङ्क्यम्, ज्ञायमानपदस्यैव हेतुत्वाभिप्रायेणोक्तपक्षकथनात् ।

यत्तु निरुक्तस्फुरणस्य उभयत्राप्यसिद्धत्वेन तद्घटितहेतोः सन्दिग्धासिद्धिरिति,

तन्न, स्फुरणस्य प्रकारान्तरेण निर्वक्तुमशक्यत्वात् ।

यत्तु अज्ञानसामान्याविषयत्वप्रयोजकविशिष्टचितः लघुचन्द्रिकोक्तप्रसक्षस्य घटप्रत्यक्षकालेऽसम्भवः, तद्दशायां घटाधिष्ठानब्रह्मचैतन्यस्य मूलाज्ञानेनाऽऽवरणात् । एकाज्ञानपक्षे घटादिचाक्षुषवृत्त्या अज्ञाननाशे सद्योमोक्षापत्तेश्चेति,

तन्न, शुद्धचितः अखण्डानन्दरूपेणाऽज्ञानावरणेऽपि घटादिचाक्षुषवृत्तिकाले घटादिचित्तादात्म्यावच्छेदेन शुद्धचिति अ-

ज्ञानसामान्याविषयत्वसत्त्वात् । एकाज्ञानपक्षेऽपि पल्लवाज्ञानानां घटावच्छिन्नचैतन्यविषयकाणां सत्त्वात् तद्दशायां पल्लवाज्ञान-नाशेऽपि मूलाज्ञानानाशेन सद्योमोक्षाप्रसक्तेः ।

यत्तु असत्त्वापादकाज्ञानशून्यचिदस्तित्वमित्युक्तमयुक्तम्, चैत्रस्य स्फुरति, न मैत्रस्य' इतिवत् 'चैत्रस्याऽस्ति, न मैत्रस्य'-इत्यापत्तेरिति,

तन्न, अस्तिस्फुरत्योरेकार्थत्वं जानतस्तथैव व्यवहारात् । न हि घटकलशशब्दयोरेकार्थत्वमजानतः घटोऽस्तीत्यत्र कलशोऽस्तीत्यव्यवहारमात्रेण तौ शब्दौ भिन्नार्थौ भवतः ।

यत्तु कालसम्बन्धित्वमस्तित्वमिति,

तन्न, कालोऽस्तीत्यव्यवहारापत्तेः ।

यत्तु व्यवहारे व्यवहर्तव्यज्ञानस्य न हेतुत्वं, शुकादिव्यवहारे व्यभिचारादिति,

तन्न, शुकानां परस्परव्यवहारे तज्ज्ञानस्य तेषु सम्प्रतिपत्तेः ।

एवं स्वान्यत्वाभावविशिष्टा स्वनिष्ठापरोक्षत्वापेक्षणीया चित् यस्य तत्त्वं स्वप्रकाशत्वम्, स्वापरोक्षत्वापेक्षणीया चित् यदन्या न भवति तत्त्वमिति यावत् । स्वपदयत्पदाभ्यामेका व्यक्तिर्ग्राह्या, तादृशस्वप्रकाशभिन्नत्वं दृश्यत्वम् । शुद्धगतचिदंशस्याऽपरोक्षत्वे स्वान्यचिदपेक्षा नाऽस्ति, आनन्दांशस्य तु तिरोधानात् तदपरोक्षत्वस्य स्वान्यचिदंशापेक्षत्वात् न स्वप्रकाशत्वम् ।

यत्तु शुद्धगतानन्दांशस्याऽस्वप्रकाशत्वे तत्र व्यभिचार इति,

तन्न, आनन्दांशत्वविशिष्टरूपेण मिथ्यात्वस्येष्टत्वात् । मोक्षे आनन्दावाप्तिश्रुतेः उक्तांशत्वोपलक्षितानन्दस्वरूपपरत्वात् नोक्तश्रुतिविरोधः ।

यत्तु शुद्धगतचिदंशस्य स्वप्रकाशत्वं न सिद्ध्यति, शुद्ध-

गतचिदंशापरोक्षत्वापेक्षणीयचितः पदज्ञानरूपायाः स्वान्यत्वेन पदन्या न भवतीति वक्तुमशक्यत्वादिति,

तन्न, शाब्दबोधे ज्ञायमानपदहेतुत्वाभिमापकत्वस्योक्तत्वात् ।

प्रकृते अपरोक्षत्वं चाऽज्ञानसामान्याविषयत्वप्रयोजकविशिष्टचित्त्वं । प्रयोजकं च घटादिप्रत्यक्षस्थले घटसंयुक्ततदाकारवृत्तिजनकसामग्री, सुखादिस्थले सुखादिजनकसामग्री, सुखादिपूर्वकालतावच्छिन्नस्य सुखादौ विद्यमानस्याऽज्ञानविषयत्वस्य सुखाद्युत्पत्तिक्षणावच्छेदेनाऽभावो हि तादृशसामग्रीप्रयुक्तः, 'इदानीमज्ञानाविषयत्वं सुखादौ चन्दनसंयोगादिप्रयुक्तम्' इत्यनुभवात्, अज्ञानसामान्यशून्यचित् नाऽपरोक्षत्वम्, साक्षात्करोतेः सकर्मकत्वात् फलव्यापकरणव्यापारवाचिना एव धातोः सकर्मकत्वात् फलाप्रयोजकयोर्धातुवाच्याघटकत्वे धातोः सकर्मकत्वानुपपत्तेः । अत एव जानात्यर्थोऽपि स्फुरणमसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचित्, जानातेः सकर्मकत्वात् ।

यत्तु साक्षात्करोतेः अज्ञानाविषयत्वप्रयोजकविशिष्टचिदर्थत्वेऽपि प्रकृते हेतौ अज्ञानसामान्यशून्यचित एव लाघवात् निवेशः स्यादिति,

तन्न, 'साक्षात्करोति' इति धात्वर्थस्याऽनुगतस्य घटकतया हेतौ निवेशसम्भवे तथा निवेशासम्भवात् ।

यत्तु 'घटमिच्छति,' 'करोति' इत्यादिसविषयकार्थकधातुस्थले विषयत्वरूपगौणकर्मत्वस्य वाच्यतया धातोरिच्छादिमात्रार्थत्ववत् साक्षात्करोतेरपि सविषयकधातुत्वात् ज्ञानविशेष एव तदर्थः, नोक्तविशिष्टचित्, उक्तविशिष्टचितो धात्वर्थतावच्छेदकफलशालित्वरूपकर्मत्वार्थं धात्वर्थत्वस्वीकरणमयुक्तम्, 'सर्वमीश्वरः साक्षात्करोति', 'जानाति' इत्यादिव्यवहारानुपपत्तिश्च, ई-

श्वरस्याऽज्ञानाभावादिति,

तन्न, 'घटं साक्षात्करोति'इत्यादौ मुख्यकर्मत्वस्योक्तरीत्या सम्भवस्थले गौणकर्मत्वस्वीकारे 'गङ्गायां घोषः'इतिवत् 'गङ्गायां स्नाति'इत्यत्राऽपि गङ्गापदस्य तीरार्थत्वापत्तेः, अत एव 'घटं साक्षात्करोति'इत्यत्र मुख्यार्थस्याऽपि साक्षात्करोति—जानात्या-दरीश्वरपदसमानाधिकरणस्थले लक्षणाश्रयणं, न त्वनावृतात्वता 'देवदत्तो घटं साक्षात्करोति'इत्यादौ मुख्यसम्भवस्थलेऽपि लक्ष-णाऽमूर्खेणाऽभ्युपगन्तुं युक्ता !

वस्तुतस्तु 'घटं करोति'इत्यादौ उत्पत्तिप्रयोजकयत्नो हि कृ-ञ्धात्वर्थः:, यतेस्तु अकर्मकत्वात् केवलयत्न एवाऽर्थः, 'सुख-मिच्छति,'इत्यत्र फलप्रयोजकेच्छा धात्वर्थः, इच्छायाः फलं सुखादौ प्रमातृसम्बन्धः, गवादौस्वत्वादिः । न च यत्र पुत्रस्य सुखेच्छया व्यजनचालनं कृतं, शत्रोरपि सन्निधानात् सुखं जातं तत्र 'शत्रोः सुखमिच्छति'इतिप्रयोगापत्तिरिति शङ्क्यम् । तथाविध-प्राचीनप्रयोगाभावादेव तथाप्रयोगापादनासम्भवात् । अत एवो-द्भिदधिकरणे भाट्टदीपिकायां 'फलोद्भेदनकारित्वरूपोद्भिच्छब्द-योगार्थस्य सोमयागे सत्त्वेऽपि न तत्रोद्भिच्छब्दप्रयोगापत्तिः, प्राची-नप्रयोगाभावात्—'इत्युक्तम् । 'स द्वेष्टि'इत्यादौ अनिष्टफलप्रयोजक-द्वेषो द्विषधात्वर्थः । न च सर्वद्वेषप्रयोजकसामग्र्या मित्रस्याऽपि अ-निष्टं जातं, तत्र 'मित्रं द्वेष्टि इतिप्रयोगापत्तिः, उत्पत्तिप्रयोजकयत्नस्य कृञर्थत्वे जलाहरणाद्यनुकूलयत्नेन श्रमोत्पत्तौ 'श्रमं करोति'इति-प्रयोगापत्तिरिति च शङ्क्यम्, तत्र प्राचीनप्रयोगाभावादेव तदापादनासम्भवस्योक्तत्वात् । एवं 'ईश्वरः सर्वं साक्षात्करोति,' 'जानाति'इत्यादौ 'चैत्रो घटं स्मरति'इत्यादौ च तत्तद्धात्वर्थलक्षण-विषयतानुकूलतत्तज्ज्ञानविशेषे तत्तद्धातोर्निरूढलक्षणा, न तु

केवलतत्तज्ज्ञाने लक्षणा, तत्तद्धातोः सकर्मकत्वानुपपत्तेः, तत्समभिव्याहृतद्वितीयायाः विषयत्वे लक्षणापत्तेः, तत्तद्वितीयाप्रकृतिप्रातिपदिकार्थस्य कर्मत्वानुपपत्तेश्च । न हि 'कर्तुरीप्सिततमं कर्म'इति सूत्रेण धात्वर्थतावच्छेदकफलशालित्वस्य कर्मत्वकथनवत् केनचित्सूत्रेण धात्वर्थविषयत्वं कर्मत्वमिति कथितमस्ति, न हि योगविभागात् क्रियाविषयश्च कर्म इति सूत्रार्थः शङ्क्यः, योगविभागस्य महाभाष्येऽनुक्तत्वात्, 'घटं जानाति,' 'ईश्वरः सर्वं जानाति'इत्यादावपि तत्तत्फलावच्छिन्नव्यापारस्य उक्तरीत्या धात्वर्थत्वमादाय धात्वर्थतावच्छेदकफलशालित्वरूपकर्मत्वसम्भवे योगविभागस्य रामरुद्रभट्टाद्यर्वाचीनकल्पितस्याऽसङ्गतत्वाच्च ।

एतेन शुक्तिरूप्यविषयकाज्ञानाभावेन 'शुक्तिरूप्यं साक्षात्करोति', 'जानाति'इत्यादिप्रयोगानुपपत्तिः परास्ता, तत्राऽज्ञानविषयत्वसामान्याभावप्रयोजकविशिष्टचितः मुख्यप्रत्यक्षस्य, असत्त्वापादकाज्ञानाविषयत्वप्रयोजकचिद्रूपस्फुरणाख्यमुख्यज्ञानस्याऽसम्भवेऽपि तत्तद्विषयताविशेषानुकूलतत्तज्ज्ञानविशेषरूपनिरूढलाक्षणिकार्थमादाय प्रयोगोपपत्तेः ।

यत्तु स्वव्यधिकरणफलावच्छिन्नव्यापारार्थकधातुत्वं धातोः सकर्मकत्वमित्युक्तमयुक्तम्, फलस्याऽपि किञ्चिदपेक्षया व्यापारत्वेन स्ववाच्यव्यापारव्यधिकरणफलाप्रसिद्धेरिति,

तन्न, किञ्चिदपेक्षया फलस्य व्यापारत्वेऽपि प्रकृतव्यापारापेक्षया फलत्वव्यधिकरणत्वयोः सम्भवात् अप्रसिद्ध्यभावादित्यलं प्रासङ्गिकेन ।

यत्तु 'स्वप्रकाशं ब्रह्म'इति समानाधिकरणप्रतीत्या ब्रह्मण्यपि स्वप्रकाशभेदसत्त्वाद्व्यभिचारः, मिथ्याभूते स्वप्रकाशत्वोपहिते स्वप्रकाशभिन्नत्वाभावेन भागासिद्धिश्चेति,

तन्न, नञुल्लेखिप्रतीतियोग्यभेदस्य हेतुशरीरे निवेशेन व्यभिचाराभावात्, मिथ्याभूते उपहिते विवक्षितस्वप्रकाशत्वोपलक्षितभेदस्य सत्त्वेन भागासिद्ध्यभावात्, उपहितोपलक्षितयोर्भेदस्य सर्वसम्मतत्वात् ।

एवं अवेद्यत्वसमानाधिकरणं यदपरोक्षव्यवहारयोग्यत्वं, तदुपलक्षितप्रतियोगिकनञुल्लेख्यभेदवत्त्वं दृश्यत्वम् । वेद्यत्वं स्वावच्छिन्नचिद्विषयकं यदभानापादकाज्ञानं, तन्निवर्तकवृत्तिव्याप्यत्वरूपं फलव्याप्यत्वम्, तच्च न ब्रह्मणि, यत्रोक्तव्याप्यत्वं स्याप्यं, तस्यैव स्वपदार्थतया ब्रह्मावच्छिन्नचिदप्रसिद्धेः, नाऽपि शुक्तिरूप्यादौ, तस्याऽतीतादिदशायामसत्त्वापादकाज्ञाननिवर्तकानुमित्यादिवृत्तिव्याप्यत्वेऽपि उक्ताज्ञाननिवर्तकवृत्त्यव्याप्यत्वात् । अत्राऽपरोक्षव्यवहारयोग्यत्वं चाऽभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वम् । उक्तावेद्यत्वसमानाधिकरणापरोक्षव्यवहारयोग्यत्वस्य ब्रह्मगतव्यक्तित्वापेक्षया गुरुत्वेऽपि तस्य भेदप्रतियोगिन्युपलक्षणतया निवेशात् अवच्छेदकत्वाभावेऽपि न क्षतिः । वृत्तिदशायामेव ब्रह्मणि उक्तवृत्तिविषयत्वसत्त्वेन तदन्यकाले ब्रह्मणि तदभावसत्त्वेऽपि उक्तवृत्तिविषयत्वयोग्यत्वेन तदभावो न प्रसज्यते, प्रसक्तावपि अत्यन्ताभावस्य हेतुशरीरे निवेशमकृत्वा भेदस्य निवेशान्न दोषः ।

यत्तु अज्ञानाप्रयुक्तं सत् यज्जन्यं, तदन्यत्वे सति कालसम्बन्धित्वं उक्तदृश्यत्वे निवेशनीयम्, अन्यथा पञ्चमप्रकाराविद्यानिवृत्तौ सत्यन्तेन वारणीयायां कालसम्बन्धित्वेन वारणीये तुच्छे च व्यभिचारादित्युक्तमयुक्तम्, सत्यवादिमते घटादौ सत्यन्ताभावादिति,

तन्न, मायाऽज्ञानजडप्रकृतिशब्दानां पर्यायतया प्रकृतिका-

र्ये घटे सत्यत्वत्रादिमतरीत्याऽपि सत्यन्तसत्त्वात्, अत्राऽज्ञानप्रयुक्तत्वमज्ञानतज्जेशान्यतरतादात्म्यानापन्नत्वम् । तेनाऽज्ञाननिवृत्तौ प्रतियोगिविधया ज्ञानस्य प्रयोजकत्वेऽपि न क्षतिः, जीवन्मुक्तभोगादिकमज्ञानानात्मकमपि तज्जेशात्मकम् ।

यत्तु अज्ञानप्रयुक्तत्वस्यैव हेतुत्वसम्भव इतरांशवैयर्थ्यमिति,

तन्न, उक्ताज्ञानप्रयुक्तत्वस्याऽस्मदभिमतहेतुशरीरेऽनिविष्टतया स्वघटकलघुविशेषणेनोपपत्तौ स्वस्य वैयर्थ्यमिति न्यायाप्रसक्त्या तेन प्रकृतहेतुवैयर्थ्यापादनायुक्तेः, अज्ञाने भागासिद्धेश्च ।

यत्तु स्वनिष्ठनाशकतासम्बन्धावच्छिन्नप्रतियोगिताकाभाववज्ज्ञाननाश्यत्वप्रकारकाद्वैतिसम्बन्धिज्ञानविषयत्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवज्ज्ञानविषयत्व—तादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वम् । यत्र दृश्यत्वं स्थाप्यं तत् स्वशब्दार्थः, ब्रह्मज्ञानं नाशकतासम्बन्धेन घटादिस्ववत्, न शुक्तिज्ञानमिति रीत्या घटादिनिष्ठा या ब्रह्मज्ञाननिष्ठनाशकत्वसम्बन्धावच्छिन्ना प्रतियोगिता, तत्काभाववत् यत् शुक्तिज्ञानं, तन्नाश्यत्वं शुक्तिरूप्यादौ, तादृशनाश्यत्वप्रकारकाद्वैतिसम्बन्धिज्ञानविषयत्वसम्बन्धेन घटादिस्ववत् शुक्तिरूप्यादि, तद्भेदवत् घटादिज्ञानं, तदेव उक्ताद्वैतिसम्बन्धिज्ञानविषयत्वसम्बन्धावच्छिन्नघटादिनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत् ज्ञानं, तद्विषयत्व—तादात्म्योभयसम्बन्धेन घटादिरूपकिञ्चिद्विशिष्टत्वं घटादावस्तीति घटादौ दृश्यत्वोपपत्तिः, घटादिकं स्वपदेनाऽऽदाय ब्रह्मणि दृश्यत्ववारणाय तादात्म्यनिवेश इति रामशास्त्रिपरिष्कारं लिखित्वा तदुपरि अनन्ताचार्येण दूषणमभिहितं,

तन्न, गौडपादादिगौडब्रह्मानन्दान्तविख्याताद्वैतिभिः उक्तदृश्यत्वपरिष्कारस्याऽनुक्ततया असूचिततया चाऽतिहेयतया च त-

त्परिष्कारस्याऽस्माभिरसमर्थनीयत्वात् ।

एतेनोक्तपरिष्कार एव नाशकतास्थाने बाधकतां, नाश्यतास्थाने बाध्यतां च निवेश्य परिष्करणं, वृत्तिनिरूपितानिरवच्छिन्नविषयत्वमेव दृश्यत्वम्, शुद्धे च वृत्तिविषयताया वृत्त्युपहितावच्छिन्नवृत्तिकतया न व्यभिचार इति परिष्करणं, स्वज्ञानातिरिक्तविषयकज्ञानाबाध्यवृत्तिविषयत्वमेव दृश्यत्वम्, स्वपदं यस्मिन् दृश्यत्वमुपपादनीयं, तत्परम्, ब्रह्मविषयकवृत्तेश्च ब्रह्मानतिरिक्तविषयकज्ञानबाध्यत्वान्न व्यभिचार इति परिष्करणं, सत्यादिपदत्रयतात्पर्यविषयाविषयकवृत्तिविषयत्वमेव दृश्यत्वमिति परिष्करणं च त्रयमप्यपास्तम्, ब्रह्मानन्दाद्यनुक्तत्वात्, असङ्गतत्वाच्च, तेषां रामशास्त्रिबुद्धिमात्रविलसितत्वाच्च ।

इति न्यायभास्करखण्डने दृश्यत्वहेतुसमर्थनं समाप्तम् ।

इदं तु बोध्यम्, एकस्यां सर्वदृश्यतादात्म्यापन्नचिद्व्यक्तौ शुक्त्यादितादात्म्यावच्छेदेन रजततादात्म्यं घटादितादात्म्यावच्छेदेन तदभावश्च वर्तते, वृक्षे अग्रमूलाद्यवच्छेदेन संयोगतदभाववत्, अग्रे वृक्षः संयोगीत्यत्राऽग्रावच्छेदेन वृक्षे संयोगानुभववत् इदं रजतं जानामीत्यनुभवेन इदंचित्तादात्म्यावच्छेदन रजतचित्तादात्म्यभानात्, तत्राऽवच्छेदकीभूतचित्तादात्म्यं विशेष्यता, अवच्छेद्यचित्तादात्म्यं च प्रकारता, तच्च तादात्म्यसम्बन्धावच्छिन्नरजतविषयता । रजतविषयतानिरूपिततादात्म्यविषयत्वस्याऽवच्छेद्यत्वे तु उक्तावच्छेद्यं उक्ततादात्म्यविषयत्वमेव सांसर्गिकविषयता । यद्विषयतानिरूपिता तादात्म्यविषयता, सा तादात्म्यविषयतानिरूपिका प्रकारता । अवच्छेद्यावच्छेदकयोः सामानाधिकरण्यावश्यकतया चिति तादात्म्यसम्बन्धेन इदमर्थस्य रजतस्य च

सत्त्वमावश्यकं, तच्च तादात्म्यं विषयता, चिच्च इदंतादात्म्यवती, तादात्म्येन इदंवती च, रजततादात्म्यवती तादात्म्येन रजतवती च, इदंतादात्म्यावच्छिन्नस्य रजतविषयत्वरूपरजततादात्म्यस्य इदमवच्छिन्नत्वमप्यस्ति, तत्र इदंतादात्म्यवत्यां चिति रजतस्य तत्तादात्म्यस्य रजतत्वस्य च भ्रमस्थले उत्पत्तिरावश्यकी, अन्यथा उक्तानुव्यवसायेन इदंतादात्म्यरजततादात्म्ययोरवच्छेद्यावच्छेदकभावावगाहनानुपपत्तेः, तादृशभ्रमस्थल एव रजतमिदं जानामीत्यनुभवेन रजतविषयत्वावच्छेदेन इदंचित्तादात्म्यरूपेदंविषयत्वावगाहनात् । इदमर्थस्य स्वरूपत उत्पत्त्यभावेऽपि भ्रमस्थले पूर्वसिद्धस्य इदमर्थस्य भ्रमकालोत्पन्नरजतानुयोगिकेदंतादात्म्योपहितरूपेणोत्पत्तिरावश्यकी, उक्तानुभवानुसारात् । तथा च भ्रमस्थले पञ्चपदार्थोत्पत्तिः । रजतं, रजतत्वं, रजतप्रतियोगिकतादात्म्यं, इदंप्रतियोगिकतादात्म्यं, तदुपहितरूपेण इदमर्थश्चेति । ह्रदो वह्निमानिति परोक्षभ्रमस्थलेऽपि "ह्रदं वह्निमन्तं जानामि" 'वह्निमन्तं ह्रदं जानामि'इत्यनुभवद्वयानुरोधेन पञ्चपदार्थोत्पत्तिरावश्यक्येव । कपालं घटवदिति प्रमास्थले, घटः सन्निति प्रमास्थले च "कपालं घटवन्तं जानामि" 'घटवन्तं कपालं जानामि,' 'सन्तं घटं जानामि,' 'घटं सन्तं जानामि'इत्यनुभवानुरोधेन उक्तरीत्या पदार्थभानानुरोधेन कपालतत्तादात्म्यघटतत्तादात्म्यघटत्वकपालत्वानां सत्तादात्म्यतत्तादात्म्योपहितत्वविशिष्टसतोः घटतादात्म्यघटघटत्वानां च व्यावहारिकसत्त्वाश्रयत्वविशिष्टरूपाणां भानं, न प्रमाकाले तेषामुत्पत्तिः, तत्पूर्वमेव सिद्धत्वादिति ।

इति न्यायभास्करखण्डने विषयतायाश्चित्तादात्म्यरूपत्वसमर्थनम् ।

अनन्तरचितो न्यायभास्करः खण्डितो मुदा ।
रामसुब्रह्मण्यविदुषा रघुवीरप्रसादतः ।

इति सर्वतन्त्रस्वतन्त्रभगवत्कलावतारश्रीमदश्वत्थनारायणशास्त्रिणां पौत्रेण रामसुब्रह्मण्यशास्त्रिणा विरचितं न्यायभास्करखण्डनं समाप्तम् ।

ॐ

* तत्सत् *



श्रीः ।

# मध्वचान्द्रिकाखण्डनम् ।

व्यासरायकृतमध्वचन्द्रिका रामसुब्बविदुषा विचाल्यते ।
शाङ्करीयमतसिद्धवर्त्मना जानकीशमभिवन्द्य भक्तितः ॥ १ ॥

**सू० अथाऽतो ब्रह्मजिज्ञासा ॥ १ ॥**

अत्राऽऽचार्यवाचस्पतिमिश्राः–

प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाऽहमितिप्रकाशमानत्वादमन्दिग्धत्वेन न विचारविषयत्वम् । नाऽप्यविद्यानिवृत्तिः प्रयोजनम्, अहमिति आत्मनि भासमानेऽपि तदनिवृत्तेः । न च अहमिति प्रत्ययः 'स्थूलोऽहं कर्ता भोक्ता दुःखी'इत्यात्मानं गृह्णाति, तद्विपरीतश्च वेदान्तप्रतिपाद्य इति विषयसिद्धिरिति वाच्यम् । वेदान्तानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधकानामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगितया अविवक्षितार्थकत्वात् । तथा च वेदान्तविचारो नाऽऽरब्धव्य इति पूर्वः पक्षः ।

राद्धान्तस्तु–वेदान्तवाक्यैर्ज्ञानानन्दैकरसोऽद्वितीय आत्मा उपक्रमादिभिः प्रतिपाद्यते, न चाऽऽत्मतत्त्वमभिदधन्ति तत्पराणि सन्ति वेदान्तवाक्यानि युक्तमुपचरितार्थानीति वक्तुम्, प्रत्यक्षं तु सम्भावितदोषमपौरुषेयेणाऽऽगमेन बाध्यते, तेन वेदान्तवेद्यः शुद्धोऽहंप्रत्यये न भातीति विषयादिसिद्धिरिति–प्राहुः ।

यत्तु शुद्धो न भातीति कोऽर्थः ? किमात्मस्वरूपे किञ्चिद्भाति किञ्चिन्न भातीति वा ?, आत्मस्वरूपमेव न भातीति वा ? यद्वा अनात्माऽपि भातीति वा ? आद्ये अभासमानोंऽशः शरीरादिभ्यो भेदो वा ? कर्तृत्वभोक्तृत्वाद्यभावो वा ? ब्रह्मात्माभेदो वा ? द्वितीयमात्राभावो वा ? अभासमानांश आत्मभिन्नः सत्यश्चेत्, अपसिद्धान्तः । मिथ्या चेत्, न तत्त्वावेदकशास्त्रवेद्यः । आत्ममात्रत्वे तु द्वितीयपक्षान्तर्भावः । तथाऽपि कल्पितेन भेदेनाऽगृहीत इव भातीति चेत्, न, तत्त्वतो गृह्यमाणे अधिष्ठाने भेदकल्पनायाः अगृहीतत्वारोपस्य वा अयोगात् । अत एव न द्वितीयः, तस्य स्वप्रकाशत्वेनाऽभानायोगात् । स्वप्रकाशस्याऽप्यभाने अविद्यादेर्दुःखादेश्च प्रकाशो न स्यात्, तयोश्चैतन्याधीनप्रकाशत्वोपगमात् । न तृतीयः, अनात्मनोऽधिकस्य भानेऽपि आत्मनोऽसन्दिग्धत्वेन शास्त्राविषयत्वतादवस्थ्यात्, अधिष्ठाने तत्त्वतः स्फुरति अनात्मारोपायोगाच्चेति,

तन्न,'शुद्धः' इत्यस्य अविद्यातत्प्रयुक्तान्यतराभिन्नाचिद्रूप इत्यर्थकत्वेन तस्याऽहंप्रत्यये भानाभावेन त्वदुक्तविकल्पदूषणानां शुद्धशब्दार्थाबोधविलसितत्वात् ।

यत्तु स्वरूपचैतन्यस्य अज्ञानाविरोधित्वे तदाकारवृत्तेस्तद्विरोधित्वे साक्षिभास्यदुःखादौ अज्ञानप्रसङ्गः, अयं घट इति वृत्तिज्ञानस्य घटावच्छिन्नचैतन्यविषयकतया तेन ब्रह्माज्ञाननिवृत्त्यापत्तिरिति,

तन्न, यस्य घटादेः न जानामीत्यनुभवः, तद्विषयकमज्ञानम्, सुखादेर्हि न जानामीत्यनुभवाभावात् तत्राऽज्ञानप्रसक्त्यभावात्, घटाकारवृत्त्या घटावच्छिन्नस्य विशिष्टचैतन्यस्य विषयीकरणेऽपि शुद्धस्याऽविषयीकरणात् शुद्धाज्ञाननिवृत्त्यभावात् ।

अत्र विवरणाचार्याः—

प्रत्यग्ब्रह्मैक्यं विचारशास्त्रस्य विषयो न भवति, कर्तृत्वादेर्विरुद्धधर्मस्य सत्यत्वेन जीवब्रह्मैक्यायोगात् । नाऽपि तन्निवृत्तिः प्रयोजनं, ज्ञानस्य अज्ञानमात्रनिवर्तकत्वेन सत्यस्य कर्तृत्वादेर्बन्धस्य ज्ञानानिवर्त्यत्वायोगादिति प्राप्ते—

राद्धान्तः । सत्यं कर्तृत्वभोक्तृत्वादिप्रपञ्चस्य सत्यत्वे विषयादिर्न सिद्ध्यतीति । प्रपञ्चस्तु मिथ्यैव, अत एव भाष्ये अध्यासवर्णनम् । मिथ्यात्वं तु आरम्भणाधिकरणे स्फुटीभविष्यतीति प्राहुः ।

यत्तु कर्तृत्वादिविशिष्टस्य सम्भावितदोषेणाऽतत्त्वावेदकेन प्रत्यक्षादिना ब्रह्मणः सकाशात् मिथ्याभूतभेदे गृहीतेऽपि तात्त्विकाभेदे मानान्तराविरोधेन योग्यतायाः सत्त्वात् तत्त्वम्पदमुख्यार्थत्वाय 'तत्त्वमसि'वाक्यावैयर्थ्याय च विशिष्टस्यैव निर्दोषश्रुत्या तात्त्विकब्रह्माभेदबोधनसम्भवेन विषयसिद्ध्यर्थं अध्यासो न वक्तव्यः । न च विरुद्धधर्मस्य सदा सत्त्वे भेदस्तात्त्विक एव स्यादिति वाच्यम् । अस्याऽप्यनुमानस्य श्रुतिविरुद्धत्वेन अतात्त्विकविषयत्वात् । नाऽपि प्रयोजनार्थमध्यासोक्तिः, सेत्वज्ञानाकार्यस्याऽपि पापस्य सेतुज्ञानान्निवृत्तेरिति ।

तन्न, 'एकमेवाऽद्वितीयं,' 'तद्धाऽस्य विजज्ञौ'इत्युपक्रमोपसंहाराभ्यां अद्वितीयब्रह्म—निर्विशेषविषयाभ्यां तन्मध्यपतितस्य निर्विशेषविषयत्वावगमेन तद्घटक'तत्त्वमसि'इत्यादेरपि जीवत्व—ब्रह्मत्वोपलक्षितचिन्मात्रे तात्पर्यावगमात् विशिष्टयोरभेदे 'तत्त्वमसि' वाक्यतात्पर्यस्यैवाऽभावात् । सेतुज्ञानस्य पापनाशं प्रति हेतुत्वेऽपि उपादानेन सह कार्यनिवृत्तिरूपबाधं प्रति अप्रयोजकत्वात् । बाधितस्य तु अध्यासवर्णनं, न तु नाशमात्र-

प्रतियोगिन इति विवरणाचार्याभिप्रायात् ।

माध्वास्तु—

ब्रह्मविचारो न कर्त्तव्यः, उत कर्त्तव्यः ? इति चिन्ता। तदर्थं विषयादिकं न सम्भवति, उत सम्भवतीति ? तदर्थं विषयभूतं ब्रह्म किं प्रत्यगर्थभूतो जीवः, उत तदन्यः ? इति ।

पूर्वपक्षस्तु—विषयत्वेनाऽभिमतं ब्रह्म न जीवचैतन्यात् भिन्नं, नाऽपि सविशेषं, वेदान्तैश्चोपक्रमोपसंहारादिभिरखण्डप्रत्यगात्मस्वरूपमात्रप्रत्यायनात् तस्य चाऽहमिति भासमानत्वात्।

राद्धान्तस्तु–ब्रह्मशब्दोक्तगुणपूर्ति–तदभावाभ्यां जीव–ब्रह्मणोर्भिन्नत्वावगमेन ब्रह्मणि अहं प्रत्ययाविषयत्वाभावेन विषयत्वं सम्भवतीत्याहुः ।

तन्न, मध्वमते पूर्वपक्षोनोपपन्नः तत्र हि वेदान्तानां जीवब्रह्मैक्यपरत्वं मिथ्यावाद्युक्तरीत्या निश्चित्य शास्त्रानारम्भ उपपादितः—

'तत्राऽद्वैतस्याऽसिद्धत्वे न वेदान्तस्य गोचरः ।
सिद्धोऽपि यदि वेदान्तगोचरः तर्हि गोचरः ।
विचारस्य कथं न स्याद्द्वैते न च सिद्धता ।
नितान्तं तु विचारस्य गोचरः स्याद्यथातथम् ।
अद्वैतवाक्यनिचयः कर्मशेषो भवेत्तदा ।
निष्प्रत्यूहैर्भेदवाक्यैस्तदा भेदः सुनिश्चितः' ।

सिद्धान्तोऽप्यनुपपन्नः, सर्वेषां वेदान्तवाक्यानां निर्विशेषचैतन्यरूपे ब्रह्मणि तात्पर्यमाश्रित्य कृतस्य पूर्वपक्षस्य निरासाय 'तद्विजिज्ञासस्व'इति विचारविधिवाक्यगतो 'ब्रह्म' शब्दः मध्वमते स्थापितः । न चैको 'ब्रह्म' शब्दः सर्वानपि वेदान्तान् उपक्रमादिदृढन्यायैः निर्णीताद्वैततात्पर्यात् प्र-

ष्यावयितुं शक्तः । 'विप्रतिषेधे भूयसां स्यात् स्वधर्मत्वम्'इति प्रसङ्गलक्षणन्यायात्, अद्वैत उपक्रमाद्यभाव एव सिद्धान्त-हेतुर्वाच्यः, तमनुक्त्वा 'ब्रह्म' शब्दस्य हेतुत्वकथनमयुक्तम् ।

इदानीं सूत्रस्याऽवयवार्थो निरूप्यते—

अथ-नित्यानित्यविवेकादिसाधनचतुष्टयसम्पत्त्यनन्तरम्, अतः-कर्मफलानित्यत्वप्रतिपादकज्ञानफलानित्यत्वप्रतिपादक-'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते,'न स पुनरावर्तते'इत्यादि वेदाद्धेतोः, ब्रह्मजिज्ञासा-ब्रह्मविषयकज्ञानेच्छा भवतीति भामतीकारमते सूत्रार्थः । यद्यप्यस्मिन् मते सूत्रस्य विचारकर्तव्यत्वपरत्वाभावेन 'अथ' शब्दस्य अधिकारिसूचनेन न प्रयोजनमस्ति, तथाऽपि जिज्ञा-साक्षिप्तविचारस्य अधिकार्यपेक्षणात् 'अथ' शब्दस्य तत्सूच-कत्वम् । तस्मात् ब्रह्मजिज्ञासा कर्तव्या'इति भाष्यस्थमध्याहृतं 'कर्तव्य'पदं जिज्ञासाक्षिप्तविचारान्वयि ।

विवरणकारमते, अथ-नित्यानित्यवस्तुविवेकेहामुत्रा-र्थफलभोगविरागशमदमादिसाधनसम्पन्मुमुक्षुत्वरूपसाधनचतु-ष्टयसम्पत्त्यनन्तम्, अतः-नित्यानित्यवस्तुविवेकादिहेतोः, ब्र-ह्मजिज्ञासा-ब्रह्मविषयकविचारः कर्तव्य इति सूत्रार्थः । अ-स्मिन् मते 'जिज्ञासा'पदस्य विचारे लक्षणा ।

यद्यप्यस्मिन् मते 'अथ' शब्दस्याऽऽरम्भरूपाधिकारा-र्थत्वं वक्तुं युक्तं, विचारस्य कर्तव्यत्वरूपाधिकार्यत्वयोग्य-त्वात्, तथाऽपि कर्तव्यस्य विचारस्य प्रथमं अधिकारि-विषये अपेक्षोदयात् साधनचतुष्टयसम्पन्नोऽधिकारीत्येतल्ला-भार्थं 'अथ'शब्द आनन्तर्यार्थः परिगृहीतः । 'तस्मात् ब्रह्म-जिज्ञासा कर्तव्या'इति भाष्यस्थमध्याहृतं 'कर्तव्य'पदं एत-

न्मते 'जिज्ञासा'पदलक्ष्यार्थे विचार अन्वेति ।

इति भामतीकारविवरणकारमतयोर्विवेकः ।

'ब्रह्मजिज्ञासाया अनधिकार्यत्वात्'इति भाष्यं भामतीपक्षस्य साधकम् । 'तस्माद्ब्रह्मजिज्ञासा कर्तव्या'इति भाष्यं विवरणमतस्य । विवरणमते 'ब्रह्मजिज्ञासायाः अनधिकार्यत्वात्'इति भाष्यं जिज्ञासा'पदावयवार्थाभिप्रायेणेति मन्तव्यम् ।

अस्य सूत्रस्य समन्वयाद्यशेषविचारहेतुत्वात् शास्त्रप्रथमाध्यायप्रथमपादसङ्गतय इति कल्पतरावुक्तम् ।

यत्तु द्वितीयाध्यायव्यावृत्तस्य प्रथमाध्यायादिना सङ्गतिविशेषस्याऽनुक्तत्वात् कल्पतरूक्तमयुक्तमिति,

तन्न, प्रथमाध्यायवत् द्वितीयाध्यायादिसङ्गतत्वादस्याऽधिकरणस्य द्वितीयाध्याये सङ्घटनापत्तिरिति भवदभिप्रायो वक्तव्यः, स चाऽसङ्गतः, सङ्गतेः साधारणत्वेऽपि प्रथमातिक्रमे कारणाभावात् प्रथमाध्याय एव सङ्गत्या एतदधिकरणसङ्घटनस्य युक्तत्वात् ।

विवरणे श्रोतव्यादिवाक्यानां स्वार्थे समन्वयस्य तद्द्वारेण विचार्यमाणवेदान्तवाक्यानां ब्रह्मणि समन्वयनिमित्तत्वात् आद्यसूत्रं समन्वयेन सङ्गतमित्युक्तम् ।

यत्तु तत्तद्वाक्यस्य स्वार्थे समन्वयमात्रेण समन्वयाध्यायसङ्गतौ द्वितीयाध्यायगताधिकरणानामपि समन्वयसङ्गतिप्रसङ्गः, विचारकर्तव्यतामुखेन समन्वयं प्रतीव अविरोधं प्रत्यपि अस्याऽधिकरणस्य निमित्तत्वात्, द्वितीयाध्यायादिव्यावृत्तस्य प्रथमाध्यायेन सङ्गतिविशेषस्याऽसिद्धिः पादसङ्गत्यनुक्तिश्चेति,

तन्न,द्वितीयाध्यायादेः ब्रह्मणि वेदान्तसमन्वयहेतुभूतसमन्व-

यपरत्वाभावेन तदीयाधिकरणानां समन्वयाध्यायसङ्गतत्वाभावात्, जिज्ञासाधिकरणस्य येन समन्वयेन द्वारभूतेन अविरोधहेतुत्वं तत्रैव सङ्गतत्वेन अविरोधाध्यायसङ्गतत्वाभावात्, उपोद्घातरूपस्याऽस्याऽधिकरणस्य स्पष्टब्रह्मलिङ्गवाक्यविचाररूपत्वस्याऽतिस्फुटत्वात् प्रथमपादसङ्गत्यनुक्तिरित्यलम्।

अत्राऽयमथशब्द आनन्तर्यार्थः परिगृह्यते, नाऽधिकारार्थः, ब्रह्मजिज्ञासाया अनधिकार्यत्वात्'इति शङ्करभगवत्पादभाष्यम्।

यत्तु जिज्ञासाया आरभ्यत्वासम्भवेऽपि विवरणोक्तरीत्या जिज्ञासापदलक्ष्यार्थविचारस्याऽऽरभ्यत्वसम्भव इति,

तन्न, लक्ष्यार्थस्याऽऽरभ्यत्वेऽपि शक्यार्थमादायैवाऽऽचार्यैरनारभ्यत्वोक्तेः।

"मङ्गलस्य च वाक्यार्थे समन्वयाभावात्'इति श्रीमच्छङ्करभगवत्पादीयभाष्यस्य—'पदार्थ एव वाक्यार्थे समन्वीयते, स चेह वाच्यो लक्ष्यो वा! न चेह मङ्गलमथशब्दस्य वाच्यं लक्ष्यं वा'इति भामती।

यत्तु पदार्थत्वस्य वाक्यार्थान्वयं प्रति हेतुत्वे अन्योन्याश्रय इति,

तन्न, वाक्यार्थानन्वितस्याऽपि घट इत्येकपदमात्रप्रयोज्यस्मृतिविषयस्य घटरूपार्थस्य पदार्थत्वसम्प्रतिपत्त्या अन्योन्याश्रयासम्भवात्।

मङ्गलस्य च'इत्युक्तभाष्यस्य मङ्गलस्य जिज्ञासाकर्तृत्वे प्रमाणाभावात् न कर्तृत्वेन जिज्ञासायामन्वयः। नाऽपि सामानाधिकरण्येन, जिज्ञासा मङ्गलमित्यस्य अर्थवादत्वप्रसङ्गात्'इति विवरणम्।

यत्तु भवत्पक्षे 'ईक्षतेर्नाऽशब्दम्'इतिवत् मङ्गलत्वाज्जिज्ञासा कर्तव्येति हेतुत्वेनाऽन्वयोपपत्तिरिति,

तन्न, जिज्ञासायाः मङ्गलकरत्वेऽपि मङ्गलत्वाभावेन तस्य तत्र हेतुत्वेनाऽन्वयासम्भवात् । मङ्गलकर एवाऽथशब्दार्थ इति चेन्न + लक्षणापत्तेः ।

'पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याऽव्यतिरेकात्'इति शङ्करभगवत्पादीयश्रीभाष्यस्य 'आनन्तर्यार्थत्व इव पूर्वप्रकृतार्थत्वेऽपि जिज्ञासाहेतुभूतस्य पूर्वप्रकृतस्य लाभात् फलाभेदात् व्यर्थ आनन्तर्यार्थत्वाग्रहोऽस्माकम्'इति भामती ।

यत्तु पूर्वप्रकृतापेक्षार्थत्वे 'अथ'शब्द आनन्तर्यार्थः परिगृह्यते' इत्यसाङ्गत्यापातः, सूत्रे कल्पान्तरानुपन्यासेन जिज्ञासाहेतुभूतस्य पूर्वप्रकृतस्य लाभोऽप्यशक्य इति,

तन्न,'आनन्तर्यार्थः' इति व्याख्यानपदस्य 'पूर्वप्रकृतापेक्षार्थः'इति व्याख्यानपदापेक्षया अल्पाक्षरत्वलाघवात् 'आनन्तर्यार्थः परिगृह्यते'इत्युक्तेः सुसङ्गतत्वात् । 'सूत्रे कल्पान्तरानुपन्यासेन'इत्युक्तिरसङ्गता, नित्यानित्यवस्तुविवेकादि–मुमुक्षुत्वान्तस्य 'तद्यथेह कर्मचितः'इत्यादिवेदसिद्धस्य 'ब्रह्मजिज्ञासा' पदघटकीभूतपरब्रह्मार्थक 'ब्रह्म'शब्देन 'वेदस्तत्त्वं तपो ब्रह्म' इति रीत्या उपस्थापितवेदस्याऽपि परामर्शिना सौत्रातःशब्देन 'तद्यथा'इत्यादिविवेकादिबोधकवेदेन पूर्वमुपस्थापितत्वात् 'अथ' शब्दस्य पूर्वप्रकृतापेक्षार्थत्वोपपत्तेः भामतीकल्पतरूक्तातःशब्दार्थरीत्या सिद्धत्वात् ।

उक्तभाष्यस्य 'प्रकृतादर्थान्तरत्वं हि सतः कुतश्चित् प्रकृतापेक्षार्थम् । पुष्कलकारणाच्चेत् आनन्तर्याभिधानं विना कारणत्वासिद्धेः, आनन्तर्याभिधाने च प्रकृतादर्थान्तरत्वस्य

अन्तर्णीततया सिद्धिः' इति विवरणम्

यत्तु आनन्तर्यानभिधानेऽपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धिः। अन्यथा आनन्तर्यार्थत्वेऽपि तत्प्रतियोगिनो हेतुत्वासिद्धिरिति,

तन्न, 'परमानन्दो मोक्षः ज्ञानं तु सम्पादनीयम्' इत्यत्र ज्ञानात् पूर्वप्रकृतस्य ज्ञानजन्यफलत्वसम्प्रतिपत्तेः वैयर्थ्यपरिहारार्थं प्रकृतस्य हेतुत्वसिद्धिरिति भवद्वचनस्य तत्र व्यभिचारात्। आनन्तर्याभिधाने तु आनन्तर्यप्रतियोगिनः प्रकृतस्य फलत्वासम्भवेन हेतुत्वं सिद्ध्यतीति विवरणाभिप्रायात्।

यत्तु अध्याहृत'कर्तव्य' पदस्य भाष्यस्थस्य भामतीमते आक्षिप्तविचारान्वयवत् आनन्तर्यार्थकश्रुतार्थशब्दस्याऽपि आक्षिप्तविचारान्वयः स्यादिति,

तन्न, श्रूयमाणस्य श्रूयमाण'जिज्ञासा'पदेनाऽन्वये सम्भवति तत् परित्यज्याऽऽक्षिप्तेनाऽन्वयापादनस्याऽयुक्तत्वात्। कर्त्तव्यत्वस्य जिज्ञासायामन्वेतुमयोग्यत्वेन आक्षिप्तविचारान्वयः स्वीकृतो भामत्याम्।

यत्तु नित्यानित्यवस्तुविवेकः 'ब्रह्म नित्यं, अन्यदनित्यं' इति विवेकः, ? किं वा नित्यत्व—तदाश्रययोः अनित्यत्व—तदाश्रययोश्च धर्मधर्मिणोः परस्परं विवेकः, ! उत अनित्यस्य किञ्चिदधिष्ठानमस्तीति निश्चयः ? नाऽऽद्यः, शास्त्रारम्भवैयर्थ्यात्। न द्वितीयः, तन्मात्रेणाऽनात्मप्रहाणेनाऽऽत्मविचारे प्रवृत्त्ययोगात्, वैराग्यायोगाच्च। नाऽपि तृतीयः, ब्रह्मत्वाकारेणाऽज्ञानेऽपि ब्रह्मणोऽधिष्ठानस्य शास्त्रवेद्यस्य वस्तुतो ज्ञातत्वेन शास्त्रवैयर्थ्यादिति,

तन्न, प्रथमविकल्पस्य भामतीकल्पतर्वोरनुक्तत्वात्, अनात्मनां प्रायेणाऽनित्यत्वाविकारवत्त्वादिदोषवत्त्वदर्शनेन तत्प-

हाणेनाऽऽत्मविचारप्रवृत्तेरुचितत्वात् । वैषयिकफलवैराग्यस्य सम्भवेन द्वितीयाविकल्पस्य दोषविकलत्वात् । जीवत्वोपलक्षितज्ञानेश्वरत्वोपलक्षितज्ञानोत्तरकालीनजीवत्वेश्वरत्वोभयोपलक्षिताखण्डचैतन्यज्ञानस्य शास्त्रतात्पर्यविषयत्वेन तस्य जीवेश्वरस्वरूपविचारमन्तरेणाऽलब्धसत्ताकतया संसाराधिष्ठानं किञ्चिदस्तीति यज्जीवेश्वराविचारमन्तरेणाऽप्युत्पद्यमानं ज्ञानं तद्विलक्षणतया च तृतीयपक्षे दोषाभावात् ।

यत्तु 'ध्वंसाप्रतियोगित्व—तत्प्रतियोगित्वविवेको नित्यानित्यविवेकः' इति विवरणोक्तमयुक्तम् । प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वरूपबाध्यत्ववतः प्रपञ्चस्य शुक्तिरूप्यवत् उत्तरावस्थारूपध्वंसप्रतियोगित्वाभावादिति'

तन्न, पारमार्थिकत्वाकारेणाऽत्यन्ताभावप्रतियोगित्वस्य स्वरूपेण ध्वंसप्रतियोगित्वेनाऽविरोधात् । पारमार्थिकत्वं–तु ज्ञानानिवर्त्यत्वं, न तूक्तात्यन्ताभावाप्रतियोगित्वमिति नाऽन्योन्याश्रयः । न च ब्रह्मणि निराकारे उक्तात्यन्ताभावप्रतियोगित्वमस्तीति शङ्क्यम् । निराकारे उक्ताभावप्रतियोगित्वरूपाकारस्याऽप्यसम्भवात् । मूलाज्ञानकार्यशुक्तिरूप्यादेरुत्तरावस्थाभावेन स्वरूपेण ध्वंसप्रतियोगित्वं नास्ति, मूलाज्ञानपरिणामे तु प्रपञ्चे तदस्त्येव, अतो घटादौ अनित्यत्वव्यवहारः, न तु शुक्तिरूप्यादाविति विवेकः । न च 'एषोऽश्वत्थः सनातनः' इत्यादिना प्रपञ्चस्याऽपि मुक्तिदशाभावित्वावगमात् मोक्षेऽप्यतात्त्विकानुवृत्तिः, सनातनपदस्य आपेक्षिकनित्यत्वपरत्वेन मोक्षदशाभावित्वागमकत्वात्, अन्यथा 'अतोऽन्यदार्तम्' इति श्रुतिविरोधापत्तेः

यत्तु नित्यानित्यवस्तुविवेकस्य भ्रमत्वे ब्रह्मविचारो

ऽनित्यफलकः स्यात्, प्रमात्वे विवेकशब्दितज्ञानविषयस्य भेदस्य सत्यत्वं स्यादिति,

तन्न, ब्रह्मज्ञानबाध्यार्थविषयकत्वरूपभ्रमत्वस्य व्यवहारदशाऽबाध्यविषयकत्वरूपप्रमात्वाविरुद्धत्वेन ब्रह्मविचारस्य नित्यफलकत्वोपपत्तेः ।

यत्तु 'विषयैर्नित्यसुखं ब्रह्मैवाऽभिव्यज्यते, न जन्यसुखं नाम तदतिरिक्तं किञ्चिदस्ति' इति विवरणग्रन्थेन वैषयिकसुखस्य ब्रह्मरूपत्वोक्त्या तत्र वैराग्यमुत्पादयितुं न शक्यते, किं च तत्त्वतो नित्यसुखब्रह्मभेदहीने विषयसुखे वैराग्यासम्भव इति,

तन्न, 'शिखी ध्वस्तः' इत्यादाविव विषयविनाशेन विषयाभिव्यक्तत्वविशिष्टब्रह्मरूपसुखस्य स्वरूपतोऽविनाशिनोऽपि विशिष्टरूपेण विनाशसम्भवेन तत्र वैराग्योपपत्तेः ।

यत्तु श्रीशाङ्करभाष्यस्थ—'शमदमादि' इत्यादिशब्दस्य तितिक्षामात्रं नाऽर्थतया ग्रहीतुं शक्यते, विवेकादेरपि आदिपदेन ग्रहणसम्भवेन विवेकादिव्यावृत्ततितिक्षामात्रवृत्तिधर्मविशेषरूपानियामकाभावादिति,

तन्न, पदानुपात्तस्यैव 'आदि' पदग्राह्यत्वेन विवेकादेस्तत्पदेनैव गृहीतत्वेन तस्य 'आदि' पदेन ग्रहणापादनासाङ्गत्यात् ।

यत्तु मोक्षस्य नित्यासिद्धात्मरूपत्वेन मोक्षविषयकेच्छारूपमुमुक्षाया असम्भव इति,

तन्न, अविद्यानिवृत्त्युपलक्षितात्मस्वरूपमोक्षस्याऽसिद्धत्वेन तत्रेच्छायाः सम्भवात् । न च अविद्यानिवृत्तेः पूर्वमात्मनोऽविद्यानिवृत्त्युपलक्षितत्वं सम्भवति, भूतस्योपलक्षणत्वसम्प्रतिपत्तिवत् भाविन उपलक्षणत्वस्य क्वाचित्कतया सार्वत्रिकत्वाऽसम्प्रतिपत्तेः ।

यत्तु, 'अहं मुक्तः स्याम्'इतीच्छा न सम्भवति, अहमर्थस्य मुक्तावनन्वयात्, 'चिन्मात्रं मुक्तं स्यात्'इति कस्याऽपि मुमुक्षा न दृष्टेति,

तन्न, अद्वैतसिद्धान्ते प्रमाणबलेनाऽन्तःकरणावच्छिन्नस्याऽपि चैतन्यस्य अहमालम्बनत्वस्वीकारेण अन्तःकरणस्य मुक्तावभावेऽपि चैतन्यस्य मुक्तावन्वयसम्भवेन 'अहं मुक्तः स्याम्'इति मुमुक्षोपपत्तेः अन्यथा शरीरविशेषविशिष्टस्य 'अहं स्वर्गी स्याम्'इति कामनया यागकरणानापत्तेः, ब्राह्मणादिशरीररूपविशेषणस्य स्वर्गानन्वयात्। विशेषणस्याऽनन्वयेऽपि विशेष्यान्वय इति चेत् ?, प्रकृते ऽपि अन्तः करणस्य विशेषणस्याऽनन्वयेऽपि चैतन्यस्यान्वय इति तुल्यम्।

यत्तु भामतीरीत्या साधनचतुष्टये पूर्वपूर्वस्य उत्तरोत्तरं प्रति हेतुत्वेन चरमा मुमुक्षैवाऽधिकारिविशेषणं, ? किं वा विवरणैकदेशिरीत्या मुमुक्षावत् विवेकादिरप्यधिकारिविशेषणं ? आद्ये मुमुक्षानन्तर्यमेव 'अथ' शब्दार्थः स्यात्, न चतुष्टयानन्तर्यम्। न द्वितीयः, शमाद्यभावेऽपि मुमुक्षामात्रेण विचारदर्शनादिति,

तन्न भामतीमते मुमुक्षानन्तर्यमेवाथशब्दार्थः, विवेकाद्यानन्तर्यं तु मुमुक्षाद्वारैवेति सिद्धान्तात्। न च यज्ञादेरपि मुमुक्षाद्वारा आनन्तर्यप्रतियोगिता स्यादिति शङ्क्यम्, 'तमेतं वेदानुवचनेन'इति श्रुत्या कर्मणां विविदिषाहेतुत्वावगमेऽपि।

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते।

तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः—'

इति मोक्षधर्मवचनेन 'संन्यस्य श्रवणं कुर्यात्'इति स्मृतिवचनेन ब्रह्मविचाररूपवेदश्रवणे यज्ञादिकर्मसंन्यासस्य

हेतुत्वोक्त्या तत्प्रतियोगिनः कर्मणः आनन्तर्यप्रतियोगित्वासम्भवात् । न च यस्य यस्य यद्धेतुत्वं तस्य तस्य तद्गतानन्तर्यप्रतियोगित्वम्, अध्ययनेन वसति' इत्यादौ व्यभिचारात्. किं तु आनन्तर्यप्रतियोगित्वयोग्यताकस्यैव । गुरूपगमनमपि नाऽनन्तर्यप्रतियोगि, सदा निकटस्थगुरुकमुमुक्षुविषये तदसम्भवात् ।

विवरणैकदेशिमते विवेकवैराग्याद्यभावेऽपि केवलमुमुक्षामात्रेण प्रवृत्तविचारस्य शिथिलत्वापत्त्या नित्यानित्यविवेकादीनां मध्ये पूर्वपूर्वहेतुसहितेष्वेव उत्तरोत्तरेषु सत्स्वेव अशिथिलविचारप्रवृत्तेः उक्तचतुष्टयानन्तरमेव निष्पत्त्या उक्तचतुष्टयस्यैवाऽनन्तर्यप्रतियोगित्वमित्यभिप्रायात् ।

यत्तु 'ब्रह्म' पदोपस्थापितवेदसामान्यान्तर्गतयोग्य—'तद्यथेह कर्मचितो लोकः क्षीयते' इति वाक्यं 'अतः' इति सर्वनाम्ना परामृश्यते, तथा च कर्मफलानित्यत्वप्रतिपादकवाक्याद्धेतोः वैषयिकसुखवैराग्योपपत्तिरिति भामत्यसङ्गता, 'अतः' शब्दस्य विचारकर्तव्यत्वरूपसाध्यानन्वयापत्ते, वैराग्यादिरूपसाधनान्वयापत्तेश्च, 'अथ' शब्दार्थानन्तर्यप्रतियोगिनि वैराग्ये 'अतः' शब्दोक्तहेतुत्वान्वयायोगाच्च, 'अथ' शब्दोपस्थापितवैराग्येणैव स्वजनकज्ञानजनकस्य 'तद्यथेह—' इति वाक्यस्य उपस्थितौ सत्यां 'ब्रह्म' शब्देन परम्परया तदुपस्थापनायोगाच्च, वैराग्यहेतुसत्यानृतविवेके हेतुतया 'नेह नाना' इत्यादेरेव वक्तव्यत्वेन 'तद्यथेह—' इत्याद्ययुक्तेश्चेति,

तन्न, विचारकर्तव्यत्वस्य मुमुक्षामात्रसिद्धिकत्वेन मुमुक्षोपपादकवैराग्यासिद्धौ तदसिद्ध्यापत्त्या वैराग्यहेतोरेव वक्तव्यत्वावश्यकत्वेन तदर्थं तद्यथेह' इतिवाक्यस्य 'अतः' शब्देन ग्रहणौचित्यात्, अपेक्षितान्वयस्यैव न्याय्यत्वेन, अन-

पेक्षितान्वयापादनायोगाच्च, 'अथ'शब्दार्थानन्तर्यप्रतियोगिनि वैराग्ये 'अतः' शब्दोक्त-'तद्यथेह-' इति वाक्यस्य स्वजन्यप्रतीतिद्वारा जनकत्वरूपहेतुतया ऽन्वयस्येष्टत्वात् अतः' इति सर्वनाम्ना 'ब्रह्म' शब्दोपस्थापितवेदवाक्यग्रहणे न्यायतः सम्भवति सति वैराग्यरूपार्थोपस्थापितवाक्यत्वेन वाक्यग्रहणस्याऽन्याय्यतया तदापादनोक्त्ययोगाच्च, 'नेह नानास्ति'इति वाक्यस्य कृत्स्नप्रपञ्चमिथ्यात्वावगमद्वारा जन्यसुखवैराग्यहेतुत्वे ऽपि 'तद्यथेह' इति वाक्यस्य कण्ठतः कर्मफलानित्यत्वबोधनेन साक्षादेव वैराग्यजनकत्वेन अतः'शब्देन 'तद्यथेह'इति वाक्यस्यैव ग्रहणौचित्यात् ।

यत्तु 'अथ' शब्दबलेनैव साधनकलापस्य ब्रह्मजिज्ञासानिरूपितहेतुतासिद्धौ 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्' इत्यादिना तस्याऽपवादशङ्कायां तन्निराकरणं 'अथ' शब्दोक्तानन्तर्यप्रतियोगिनि हेतुत्वाभिधायिना 'अतः' शब्देन क्रियत इति विवरणोक्तमयुक्तम्, 'अथ' शब्दलब्धहेतुत्वस्य पुनः 'अतः'शब्देन ग्रहणमात्रादुक्ताऽपवादनिराकरणासिद्धेरिति,

तन्न, एकतन्तुबन्धनात् द्वितन्तुबन्धने दार्ढ्यदर्शनेन 'अथ'शब्दसिद्धहेतुत्वस्यैव 'अतः'शब्देनाऽप्युक्तौ हेतुत्वदार्ढ्यसिद्धेः । विवेकवैराग्यादिगतहेतुत्वस्य दार्ढ्यं च 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्'इत्यादिवाक्यस्याऽऽपेक्षिकामृतत्वसूचक-'यत् कृतकं तदनित्यम्-'इतिन्यायोपबृंहित-'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते'इत्यादिवाक्यजन्यप्रतीत्यधीनविवेकवैराग्यादिवृत्तित्वम्, तथा चोक्तापवादनिराकरणसाधकत्वमक्षुण्णमतःशब्दस्येति युक्तमेवोक्तं विवरणकृद्भिः ।

यत्तु सामर्थ्यात् निश्चिते जिज्ञासाया अयोगात् सन्दिग्धतया ब्रह्मैव विषय, ज्ञानमेवेच्छाविषयत्वेन प्रयोजनमिति जिज्ञासापदस्वारस्येन विषयप्रयोजने सूचिते इत्युक्तिरसङ्गता, पूर्वपक्षिणा विषयाद्यभावात् इच्छा नोदेतुं युक्तेत्येव आक्षेपकरणात् तत्प्रतीच्छया विषयसाधनायोग इति ।

तन्न, ब्रह्मज्ञानसाध्योमोक्ष इति महद्य उपश्रुत्य तत्त्वबुभुत्सुना साङ्गवेदाध्ययनजन्यजीवब्रह्मैक्यविषयकापातप्रतीतेरहमितिज्ञानस्य ब्रह्मज्ञानत्वनिश्चयात्, उक्तज्ञानसत्वेऽपि मोक्षादर्शनेन जीवब्रह्मैक्यरूपविषयांशे तज्ज्ञानप्रयोजनरूपमोक्षांशे च सन्देहवता पूर्वपक्षिणा ब्रह्मज्ञानेच्छामङ्गीकृत्य विचारस्याक्षिप्तत्वात् ।

यत्तु विवरणे 'अथ शब्देनाधिकारी जिज्ञासापदेनेच्छाविषयत्वेन ब्रह्मज्ञानरूपं प्रयोजनं ब्रह्मज्ञानफलं मोक्षः ब्रह्मरूपाविषयश्च सूचित' इत्युक्तिरयुक्ता, त्वन्मते जिज्ञासापदस्य विचारलक्षकत्वेन ज्ञानेच्छापरत्वाभावात् लक्षणास्थले विषं भुङ्क्ष्वेत्यादाविव शक्यार्थस्य त्यक्तव्यत्वादिति ।

तन्न, गङ्गायां घोष इत्यत्र लक्षणास्थलेऽपि तीरे घोष इति शक्यपदनिर्देशसम्भवेन तदनिर्दिश्य गङ्गापदनिर्देशसामर्थ्यात् प्रवाहरूपशक्यार्थप्रतीत्यधीनशैत्यपावनत्वादिसूचनवत् 'अथातोब्रह्मविचार' इति वक्तव्ये विचारपदस्थाने प्रयुज्यमानं जिसापदं स्वसामर्थ्यात् जिज्ञासाप्रयोजकसन्देहस्य फलस्य च सूचकं भवतीत्यस्य प्रामाणिकसिद्धत्वात् ।

यत्तु अद्वैतमते शास्त्रारम्भसामर्थ्यात् कर्तव्यत्वं विचारस्य तेन च विषयादिसूचनं च भवत्विति,

तन्न, आक्षेप्यस्य कर्तव्यस्य अकरणे प्रत्यवायजनकस्य

नित्यकर्मणः कर्तव्यत्वस्यैव प्रयोजनाद्यन्वयाभ्युपगमेन तत्सूचकत्वानियमात् ।

यत्तु अद्वैतमते ब्रह्मपदस्य अखण्डब्रह्मपरत्वे लक्षणा मुख्यार्थत्यागश्च स्यातामिति ।

तन्न, ब्रह्मपदशक्यतावच्छेदकजगत्कारणत्वादिरूपविशेषणांशस्य त्यागेऽपि अखण्डस्य विशेष्यस्य ब्रह्मपदेन शक्त्यैव ग्रहणसम्भवात् ब्रह्मपदे लक्षणामुख्यार्थत्यागयोरप्रसक्तेः पदनिरूपितवृत्तिविशेष्यस्यापि शक्यत्वात्, अन्यथा गौरनित्या इत्यादौ गोपदस्य व्यक्तौ लक्षणापत्तिः तत्र गोत्वस्य विधेयानित्यत्वानन्वयेन विशेषणतया विवक्षाभावात् ।

यत्तु ब्रह्मत्वस्य कालापरिच्छिन्नत्वरूपत्ववत् वस्त्वपरिच्छिन्नत्वरूपभेदाप्रतियोगित्वरूपत्वात् ब्रह्मपदेन जीवाभेदो ब्रह्मणि सिद्ध्यति ब्रह्मणो जीवाद्भेदे तद्रूपविकलत्वात् अल्पत्वप्रसङ्ग इत्यद्वैत्युक्तमसङ्गतम् — ब्रह्मणो घटादिभ्यो भेदे घटादिरूपत्वाभावेन अल्पत्वापत्त्या घटादिरूपत्वस्याऽऽवश्यकत्वेन जडत्वापत्तेः अतो ब्रह्मणोऽजडत्वमिच्छता भेदस्य परिच्छेदरूपता त्याज्या, तथा च जीवभेदस्य ब्रह्मणि अपरिच्छिन्नत्वाऽविरोधितया सूत्रस्थब्रह्मपदेन अपरिच्छिन्नत्ववाचिना जीवब्रह्माभेदोऽसिद्ध इति ।

तन्न, वस्तुपरिच्छेदाभावस्य ब्रह्मणि तत्तद्वस्तुरूपत्वस्य स्वीकारेऽपि घटादिरूपत्वप्रयुक्तजडत्वाप्रसक्तेः ब्रह्मणि घटादिरूपत्वस्य घटाद्याकारेण परिणममानात्मज्ञानविषयत्वरूपत्वेन घटादिगतजडत्वाप्रसञ्जकत्वात् । अन्यथा 'यद्रजतं सा शुक्ति' रित्यादिप्रतीतिसिद्धशुक्तिनिष्ठरजतरूपत्वेन शुक्ते रजतवत् प्रातिभासिकत्वादिप्रसङ्गात्, जीवत्वविशिष्टे चैतन्ये चैतन्यांशस्य

अविद्याधीनत्वाभावेऽपि जीवत्वस्याऽऽविद्यकतया तद्विशिष्टचैतन्यस्य जीवस्य विशिष्टरूपेणाऽऽविद्यकत्वात् । विशिष्टचैतन्याकारेण परिणममानाविद्याविषयत्वरूपजीवत्वस्य ब्रह्मणि सम्भवेन ब्रह्मपदेन जीवब्रह्माभेदबोधनसम्भवात्; जीवत्वं च जाग्रदाद्यवस्थाश्रयत्वम् ।

यत्तु ब्रह्मणो निरतिशयमहत्त्वार्थं अनेकात्मकत्वे अनेकात्मकमाषराशौ निरतिशयमहत्त्वबुद्धिः स्यात् । किं च अपरिच्छेदस्य ब्रह्मानन्यरूपत्वे बृहधात्वर्थसम्भवेऽपि प्रत्ययार्थाश्रयासिद्धिः अन्यत्वेऽपि अपरिच्छेदस्य तात्त्विकत्वे ब्रह्मणस्तद्रूपत्वविकलत्वात् परिच्छिन्नत्वापत्तिः अतात्त्विकत्वे ब्रह्मणः परिच्छिन्नत्वापत्तिः, किञ्च वस्त्वन्यत् किञ्चित् सत्यमस्ति चेत् तन्निरूपितमहत्त्वं सिद्ध्यतीति ब्रह्मणस्सद्वितीयत्वापत्तिरिति ।

तन्न, ब्रह्मणोऽनेकात्मकत्वस्य अनेकात्मना परिणममानाऽविद्याविषयत्वरूपत्वात् माषराशौ तदभावेन निरतिशयमहत्त्वबुद्ध्यापादनासाङ्गत्यात् अपरिच्छेद्यत्वस्य ब्रह्मानन्यत्वमेव, बृहधातूत्तरप्रत्ययस्यापि आश्रय एवार्थः, अत्यन्ताभेदे आश्रयाश्रयिभावः 'स्वे महिम्नि प्रतिष्ठित' इत्यादाविव सम्भवतीति सिद्धान्ते दोषाभावात्, महत्त्वनिरूपकतावच्छेदकं च अल्पत्वमात्रं नतु पारमार्थिकत्वविशिष्टाल्पत्वं गौरवात् । तथाचापारमार्थिकाल्पत्वमादायापि महत्त्वं बोधयता पारमार्थिकद्वितीयरूपनिरूपकाऽसिद्ध्या ब्रह्मणस्सद्वितीयत्वापादनासम्भवात् ।

यत्तु ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा ब्रह्मण इति कर्मणि षष्ठीत्यादि श्रीशाङ्करभाष्यमसङ्गतम्, विचारजन्यज्ञानाविषयस्य ब्रह्मणः विचाराविषयत्वादिति—

तन्न, फलविषयत्वाभावेऽपि ब्रह्मणि विचाराख्यवृत्तिविषय-

स्वाङ्गीकारात् । नच ब्रह्मणोऽपरोक्षवृत्तिविषयत्वेन तादृशवृत्त्यव-च्छिन्नचैतन्यरूपफलविषयत्वमापादयितुं शक्यम्, स्वात्मनि क्रियाविरोधेन चैतन्यरूपे ब्रह्मणि उक्तचैतन्याख्यफलविष-त्वायोग्यतया तदापादनासङ्गतेः । नच तर्हि व्यापकं फलविष-यत्वं निवर्त्तमानं स्वव्याप्यं वृत्तिविषयत्वमपि ब्रह्मणि व्यावर्त्त-यतीतिशङ्क्यम्, ब्रह्मणि व्यभिचारेण व्यापकत्वस्यैवासिद्धेः ।

यत्तु कर्मणि षष्ठीपक्षे प्रमाणादिपरिकरविशिष्टब्रह्मणोजि-ज्ञासाकर्मत्वसम्भवेन प्रमाणादिजिज्ञासानामपि शाब्दत्वसम्भवात् आर्थिकत्वोक्तिरयुक्तेति ।

तन्न, जिज्ञासाकर्मसमर्पकब्रह्मशब्देन शक्त्या केवलब्रह्मस्वरू-पस्यैव बोधनेन प्रमाणादिविशिष्टब्रह्मबोधकत्वे लक्षणापत्त्या च स्वरूपस्यैव जिज्ञास्यत्वेन प्रतिज्ञातत्वावगतेः प्रमाणादि-प्रतिज्ञायाः आर्थिकत्वोक्तेरेव युक्तत्वात् ।

यत्तु पञ्चपादिकाविवरणयोः जिज्ञासाशब्दस्य अवयव-शक्त्या ज्ञानेच्छापरत्वं विचारे च लक्षणेत्युक्तमयुक्तम्, रूढ्यैव विचारबोधनसम्भवादिति ।

तन्न, शक्तिग्राहककोशव्याकरणादिप्रमाणेषु जिज्ञासाश-ब्दस्य विचारे शक्त्यनुक्तेः माध्वव्यतिरिक्तप्रामाणिकमहाज-नानां विचारे जिज्ञासाशब्दस्य प्रयोगप्राचुर्याभावेन तत्र श-क्त्यसिद्धेश्च ।

यत्तु जिज्ञासाक्षिप्तस्य विचारस्याध्याहृतकर्तव्यपदार्थान्वय इति भामत्युक्तमयुक्तं विचारे जिज्ञासापदशक्तिसम्भवेन आक्षे-पोक्त्ययोगात्—इच्छार्थे सन् प्रत्ययानुशासनस्य साधुत्वमात्रपरत्व-मेव । किञ्च विचारे कर्त्तव्यत्वाध्याहारस्य अनुवादत्वप्रसङ्गः,तस्मिन् कर्तव्यत्वस्य स्वतएव सिद्धत्वात्, किञ्च जिज्ञासापदस्य भवद्री-

स्या शक्यसम्भवेऽपि लक्षणासम्भवात् लाक्षणिकस्य विचारस्य विधिसम्भवे विचारस्याऽऽक्षिप्तत्वोक्त्ययोगः, किञ्च जिज्ञासापदस्य विषयसूचकत्वेन सफलत्वे सिद्धे नानर्थकविचारकर्त्तव्यतापरता युक्ता, किञ्च विषयाभावात् इच्छाभावं वदन्तं प्रति इच्छया विषयादिसूचनोक्त्ययोगः, किञ्च न कारणस्य जिज्ञासायाः नियमेन कार्यरूपविचाराक्षेपकता, कार्यं विनापि कारणसम्भवात्, किञ्च नचेच्छा विचारसामग्री, फलेच्छायां सत्यामपि साधनाननुष्ठानादिति ।

तन्न, जिज्ञासापदे विचारशक्तत्वस्य पूर्वमेव निराकृतत्वात्, आक्षेपमात्रेण विचारलाभे विचारे जिज्ञासापदलक्षणोक्त्यसम्भवात् आक्षेपलब्धस्य विचारस्य आपातप्रतीतार्थनिर्णायकतया सिद्धस्य विध्ययोग्यत्वात् । विचारकर्त्तव्यत्वस्य अनवधाननिवृत्त्यर्थत्वेन विचारावधानपर्यवसायिनस्सूत्रस्य अनुवादकत्वाप्रसक्तेः । जिज्ञासापदस्य विषयसूचकत्वेन सफलतया विचारकर्तव्यतायाः अनवधानानिवृत्तिप्रयोजनकत्वेन विचारकर्तव्यत्वतात्पर्यकत्वस्यावश्यकत्वात्, विषयाभावात् विचारेच्छा नोत्पत्तुमर्हतीति वदन्तं प्रति विचारेच्छया विषयसूचनोक्त्ययोगेऽपि ब्रह्मज्ञानेच्छया तत्सूचनोक्त्युपपत्तेः, सर्वत्र कारणत्वावच्छेदेन कार्याक्षेपकत्वानियमाभावेऽपि जिज्ञासायां जातायां विचारस्य सर्वत्र क्रियमाणत्वप्रतीतेः जिज्ञासारूपकारणविशेषस्य विचारविशेषरूपकार्याक्षेपकत्वस्य अप्रत्यूहत्वात् । अत एवोक्तसाधनचतुष्टयवत्पुरुषनिष्ठब्रह्मजिज्ञासा ब्रह्मविचारं प्रति पुष्कलकारणमेव उक्तविशिष्टेच्छासत्त्वे विचारस्य नियमेनोपलब्धेः ।

ननु यस्मात् ब्रह्मजिज्ञासा सम्पन्ना तस्माद्ब्रह्मविचारः

कर्तव्यः, जिज्ञासाशब्दः अवान्तरवाक्ये ज्ञानेच्छापरः, महावाक्ये विचारलक्षक, इति कौमुद्युक्तमयुक्तं, युगपज्जिज्ञासापदस्य वृत्तिद्वयप्रसङ्गात् अध्याहारसापेक्षावान्तरवाक्यकल्पनानुपपत्तेश्च, जिज्ञासाशब्दस्य ज्ञानेच्छापरत्वे मानाभावाच्चेति ।

तन्न 'अथातोधर्मजिज्ञासा'इत्यत्र धर्मशब्दस्य धर्मे शक्तिः अधर्मे लक्षणा च स्वीकर्तव्या, उपादानार्थं धर्मस्य जिज्ञास्यत्ववत् परिहारार्थमधर्मस्यापि जिज्ञास्यत्वावश्यकत्वादिति कौमारिलवार्तिकरीत्या युगपद्वृत्तिद्वयस्वीकारस्य सति प्रयोजने ऽदुष्टत्वात्, लोकेऽपि गङ्गायां मत्स्यघोषौ इत्यादौ वृत्तिद्वयस्य सम्प्रतिपत्तेः, युगपद्वृत्तिद्वयस्वीकारे दोषोक्तिस्तु युगपदेकजातीयवृत्तिद्वयविषया । तथाच ज्ञानेच्छारूपहेतोः विचारकर्तव्यत्वस्य च लाभार्थं अध्याहारस्यावश्यकत्वेन अध्याहारे अनुपपत्त्यभावात्, ज्ञाधातोः ज्ञानार्थे सन्प्रत्ययस्य च इच्छार्थे व्याकरणस्यैव प्रमाणत्वेन मानाभावादित्युक्त्यसङ्गतेः ।

यत्तु अस्य शास्त्रस्य पूर्वमीमांसया न गतार्थता, तत्र कार्यनिष्ठवेदभागस्य विचारितत्वेऽपि सिद्धवस्तुब्रह्मपरवेदस्याविचारितत्वात् तदर्थमस्य शास्त्रस्य प्रणयनमित्यद्वैत्युक्तमसङ्गतम्, उपास्यविशेषभूतब्रह्मविचारस्य उपासनापादे उपासनाविधिविचारस्य च अस्मिन् शास्त्रे प्रवर्तनायोगादिति ।

तन्न, ब्रह्मज्ञानवत् उपासनस्य मानसत्वाविशेषात् सङ्गतिविशेषलोभेन अस्मिन् शास्त्रे उपासनाविधिविचारोपपत्तेः । नच 'समुद्रं मनसा ध्यायेत्' इति ध्यानविशेषस्य पूर्वतन्त्रे विचारितत्वेन ब्रह्मोपासनस्यापि ध्यानविशेषत्वेन मानसस्य पूर्वतन्त्रे सङ्गतिसम्भवात् तत्तत्र विचार्यम्, तत्राविचार्य अत्र तद्विचारे किं विनिगमकमिति वाच्यम्, अस्मिन् शास्त्रे मानसस्य ब्रह्मज्ञा-

ब्रह्मस्य प्राधान्येन प्रतिपादनवत् पूर्वतन्त्रे बृहति प्रस्तुसमाने 'समुद्रं मनसा ध्यायेत्' इत्युक्तध्यानस्य प्राधान्येनाप्रतिपादनात् प्राधान्येन प्रतिपादितब्रह्मज्ञानेन मानसत्वसामान्यात् ब्रह्मोपासनस्यात्रैव सङ्गतेन्याय्यत्वात्। नच ब्रह्मोपासनस्य अनित्यफलत्वविधेयत्वसाधर्म्याभ्यां उपासनावाक्यस्य अतत्वावेदकत्वसाम्याच्च उपासनाविचारः पूर्वतन्त्र एव युक्त इति शङ्क्यम्, 'न स पुनरावर्तते' इत्यादिश्रुतिसिद्धं अपुनरावृत्तिरूपं मोक्षविशेषं प्रति साक्षादेव दहराद्युपासनस्य हेतुत्वात् मोक्षशास्त्रे अस्मिन्नेव प्रधानभूतफलांशमादाय सङ्गत्युपपत्त्या अत्रैव ब्रह्मोपासनाविचारस्य न्याय्यत्वात्, उद्गीथाद्युपासनन्तु उपासनत्वसाम्यात् आनुषङ्गिकतयाऽत्र विचार्यते।

यत्तु 'तद्विशेषं प्रति' सद्वैतभाष्ये विप्रतिपत्तिं प्रदर्शयता चन्द्रिकाकृता तस्यां धर्मिविकल्पेन दूषणमुक्तम्।

तन्न, ऐक्यस्य चिन्मात्रस्यैव विप्रतिपत्तिधर्मित्वात्, तथैव भामतीकल्पतर्वोरुपपादनात्, विशेष्यविप्रतिपत्त्याऽपि विशेष्यप्रतीत्यनुकूलत्वेन जीवत्वेशत्वविशिष्टविचारस्यापि न्याय्यत्वात्, मुमुक्षुभिरपि उभयानुगतचिन्मात्रज्ञानार्थं विशिष्टस्यैव प्रथमं विचार्यत्वात्, वस्तुतोऽहमालम्बने चिन्मात्रे अज्ञानवशात् देहत्वेन्द्रियत्वमनस्त्वक्षणिकविज्ञानत्वशून्यत्वविप्रतिपत्तेः सम्यक्सम्भवाच्च, सौत्रब्रह्मपदस्य निर्विशेषचिन्मात्रे स्वारस्यस्योपपादितत्वेन विप्रतिपत्तिधर्मिपरत्वसम्भवाच्चेत्यलम्।

मध्वमते अथशब्दोमङ्गलानन्तर्योभयार्थकः अतश्शब्दोविष्णुप्रसादरूपहेत्वर्थकः ब्रह्मजिज्ञासेत्यत्र समासघटकीभूता षष्ठी च कर्मणि, ब्रह्मपदं च बृहन्तोऽस्मिन् धर्मा इति अनन्तगुणात्मवाचकं सत् अल्पगुणजीवगणात् ब्रह्मणोभेद सूचयत् जीव-

ब्रह्माभेदपूर्वपक्षसूचनद्वारा तादृशपूर्वपक्षनिरासकानन्तगुणाश्रयं विष्णुं वदति । जिज्ञासाशब्दश्च रूढ्यैव श्रवणमननिदिध्यासनपरः तथा च शमदमवेदाध्ययनविष्णुभक्त्यनन्तरं विष्णुप्रसादाद्धेतोः मङ्गलरूपाणि विष्णुसम्बन्धिश्रवणमनननिदिध्यासनानि ब्रह्मापरोक्षज्ञानार्थं कर्तव्यानीति सूत्रार्थः ।

स चानुपपन्नः अथशब्दस्य मङ्गलानन्तर्योभयार्थत्वे युगपत् वृत्तिद्वयविरोधापत्तिः, युगपद्वृत्तिद्वयन्तु न युक्तमिति चन्द्रिकाकृता जिज्ञासाशब्दार्थविचारे अद्वैतिदूषणार्थमुक्तत्वात्, अन्यथा सैन्धवपदस्य युगपदश्वलवणोभयार्थत्वापत्तिः अनुगतशक्यतावच्छेदकरूपाभावस्य सैन्धव पद इव अथशब्दे मङ्गलानन्तर्योभयानुगतशक्यतावच्छेदकाभावश्च तुल्यः, गङ्गायां मत्स्यघोषावित्यादौ तु एकस्य गङ्गापदस्य प्रवाहे शक्तिः घोषे लक्षणेतिवृत्त्योर्विलक्षणत्वात् वृत्तिद्वयं न दोषाय, प्रकृते तु मङ्गले अधिकारे च एकजातीयशक्तिद्वयस्यैव वक्तव्यतया दोषोदुरुद्धरः । नच 'मङ्गलमथशब्दोच्चारणफल न वाच्यार्थ' इति टीकया प्रतीयत इति शङ्क्यम्, 'अथशब्दोमङ्गलार्थोऽधिकारानन्तर्यार्थश्च'इति मध्वभाष्यग्रन्थस्थचकारस्वारस्येन आनन्तर्यसमानयोगक्षेमत्वस्य मङ्गले प्रतीतेः वाच्यत्वावगमात् ।

'आनन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च । अथशब्द' इति मध्वभाष्योदाहृतपुराणवचने तथाशब्देन आनन्तर्यस्य यथा अथशब्दार्थत्वं तथामङ्गलस्याथशब्दार्थत्वमिति प्रतीतेः आनन्तर्यवत् मङ्गलस्य वाचकत्वावगमाच्च । अतः 'ग्रन्थादौ मङ्गलाचरणस्यावश्यकत्वात् तत्परतयाऽथशब्दं व्याचष्ट अथेतीति', तत्त्वप्रकाशिका प्रामादिक्येव । अनरशब्दस्य सर्वनामत्वमङ्गीकृत्य विष्णुप्रसादरूपहेतुपरत्वमुच्यते । तत्र 'अकारोविष्णुवाचक'

इतिकोशानुगुण्येन ?, नाद्यः उपस्थितस्यैव सर्वनाम्ना परामर्शनीयत्वात् सूत्रघटकीभूतेन केनापि पदेन अनुपस्थापितस्य विष्णुप्रसादस्य सर्वनाम्नाऽतश्शब्देन परामर्शायोगात् । न द्वितीयः अकारस्य विष्णुवाचकत्वेऽपि तत्प्रसादवाचकत्वाप्रतिपत्तेः । ब्रह्मशब्दस्य अनन्तगुणाश्रयवाचित्वं भवन्मते न सम्भवति आनन्दादिगुणानां ब्रह्मणश्च भवद्भिरत्यन्ताभेदस्वीकारात् गुणनिष्ठाधेयतानिरूपिताधारत्वस्य गुणाश्रयत्वरूपसगुणत्वस्य ब्रह्मण्यसम्भवात् अन्यथा तद्व्यक्तिस्तद्व्यक्तिमतीति वाक्यस्यापि प्रामाण्यापत्तिः । नच गुणगुणिनोरत्यन्ताभेदेऽपि विशेषबलात् गुणब्रह्मणोराश्रयाश्रयिभाव इतिशङ्क्यम् । विशेषस्य ब्रह्माभिन्नत्वे—

'एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावति' इति

भवदभिमतश्रुत्यर्थविरोधापत्तिः, अभिन्नत्वेन ब्रह्मणैव हेतुना ब्रह्मणोगुणस्य च आश्रयाश्रयिभाव इत्युक्तं स्यात्, तथाच विशेषकल्पना अनर्थिका, ब्रह्मपदेन पूर्णगुणवाचिनाऽल्पगुणाज्जीवात् ब्रह्मणो भेदस्सिध्यतीत्यभ्युपगमोऽप्यसङ्गतः भवन्मते विरुद्धधर्मयोरपि एकत्र समावेशस्वीकारात् एकत्वसङ्ख्यावच्छिन्नस्य ब्रह्मणः भवदीयानन्दमयाधिकरणे अन्नमयप्राणमयादिरूपेण, गुहाधिकरणे भोक्तात्मान्तरान्यरूपेण, सङ्ख्योपसङ्ग्रहाधिकरणे पञ्चपञ्चजनरूपेण, नस्थानतोपीत्यधिकरणे विश्वतैजसरूपेण, एकत्वाविरुद्धमनेकत्वं स्वीकृतम्, अशरीरस्यैवेश्वरस्य अरूपवदेवहीत्यधिकरणे अनुव्याख्यानन्यायसुधयोः अशरीरत्वविरुद्धं परव्यूहादिनानाशरीरत्वं स्वीकृतम्, रामकृष्णाद्यवताराणां भेदश्रवणं लौकिकैः भ्रान्त्या गृहीतस्य भेदस्य अनुवादकमित्यप्युक्तम्, 'सर्वथापितु तस्य' इत्यधिकरणे, एवमानन्दमयस्य अवय-

विनः अन्नमयत्वविरुद्धं शिरःपक्षपुच्छाद्यवयवरूपत्वं वर्णितमानन्द-मयाधिकरणे, 'एक आत्मन श्शरीरे भावा'दित्यधिकरणे काण्डवन-दाहतत्प्रशमनादिपरस्परविरुद्धं कुर्वतोः सेव्यसेवकभावादिवि-रुद्धगुणशालिनोरिन्द्रार्जुनयोरत्यन्ताभेदस्साधितः, एवं विरुद्ध-धर्मसाङ्कर्यमङ्गीकुर्वतां माध्वानां मते जीवब्रह्मणोर्विरुद्धध-र्मवत्त्वात् भेदः कथं सिद्ध्येत् । नचोदाहृतस्थले प्रमाणबलात् भेदे बाधिते भेदप्रतिनिधिना विशेषेणेश्वराचिन्त्यशक्त्या वा तत्र तत्र निर्वाहः क्रियत इतिवाच्यम् । तर्हि 'तत्वमसी'ति प्रमाण-बलात् जीवब्रह्मणोर्भेदस्य बाधितत्वेन तयोरभेदेऽपि विशेषेणे-श्वरशक्त्या वा सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिधर्मभेदव्यवहारोपपत्तेः भ-वद्भिरेवाभ्युपगन्तुंन्यापत्तेः भवदुक्तविशेषस्य अचिन्त्येश्वरशक्तेश्च ब्रह्मभेदाभेदविकल्पाभ्यां प्रागेव दूषितत्वात् । 'उभयव्यपदेशात्त्वहि कुण्डलवत्' इत्यधिकरणे भवद्भिरानन्दादिब्रह्मगुणानां तस्मा-दत्यन्ताभिन्नत्वं साधितं, भवत्सिद्धान्ते ब्रह्मशरीरस्य ब्रह्मणोऽत्य-न्ताभिन्नतया शरीरात्मवादापत्त्या चार्वाकमतप्रवेशापत्तिः ।

एतेन 'जुष्टं यदा पश्यत्यन्यमीश'मिति श्रुतावन्यशब्देन जीवब्रह्मणोर्भेदकथनात्, तयोरभेदो न सम्भवतीति नव्यमा-ध्वोक्तमपास्तम् ।

'अन्योऽन्तरात्मा प्राणमयः अन्योऽन्तरात्मा मनोमय'इत्या-दि तैत्तिरीयश्रुतौ अन्यशब्दैः अन्नमयप्राणमयमनोमयविज्ञानमया-नन्दमयानां भेदकथनेपि—

'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तम'

इति पुराणवचनमात्रेण तेषामभेदं स्वीकुर्वद्भिः भवद्भिः 'तत्वम-सि' 'ब्रह्म दासा ब्रह्म दाशा' 'नान्योऽतोऽस्ति द्रष्टा' 'नान्योऽतोऽ-

स्मिन्द्रष्टृ' 'नेह नानाऽस्ति किञ्चन' 'नात्र काचन भिदाऽस्ति' 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' 'एकत्वमनुपश्यत' 'एकधैवाऽनु द्रष्टव्य'मित्यादिश्रुतिभिः 'द्वैतिनोऽतथ्यदर्शिनः' 'ज्ञानं यथा सत्यमसत्यमन्यत्' 'एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते' 'वेणुरन्ध्रविभेदेन भेदष्षड्जादिसंज्ञकः। अभेदव्यापिनोवायोः तथाऽसौ परमात्मनः'इत्यादिभिः द्वैतिनिन्दाजगन्मिथ्यात्वजीवब्रह्माभेदबोधकैः सर्वदेशप्रसिद्धविष्णुपुराणाख्यप्रसिद्धमुद्रितामुद्रितग्रन्थस्थैर्वचनैश्च समधिगतजीवब्रह्माभेदस्य अनिच्छयाऽपि स्वीकार्यत्वापत्तेः, न ह्येवं सर्वसम्प्रतिपन्नप्रसिद्धपुराणमूलकोशे 'द्वैतिनोऽतथ्यदर्शिन' इतिवत् अद्वैतिनोऽतथ्यदर्शिन इति कुत्रापि दृश्यते। जिज्ञासापदन्तु'श्रवणमनननिदिध्यासनेषु अनुगतशक्यतावच्छेदकेन एकशक्त्या प्रवर्तते ? उत शक्तिभेदेन, नाद्यः त्रितयसाधारणशक्यतावच्छेदकरूपाऽभावात्, न द्वितीयः 'अन्याय्यं चानेकार्थत्व'मिति पूर्वतन्त्रीयसूत्रविरोधेन अनेकशक्त्ययोगात् सैन्धवादिपदेषु प्रयोगप्राचुर्यस्य अश्वलवणयोस्तुल्यत्वाच्छक्तिभेदकल्पनम् । न ह्येवं माध्वभिन्नानां श्रवणादिषु त्रिषु जिज्ञासाशब्दप्रयोगप्राचुर्यमस्ति, प्रत्युत व्याकरणादिसिद्धयोगार्थमादायैव ज्ञानेच्छायां जिज्ञासाशब्दस्सर्वैः प्रयुज्यते। तस्मान्माध्वोक्तरीत्या सूत्रार्थोऽनुपपन्नएव ।

किञ्च मध्वमतग्रन्थेषु प्रसिद्धपूर्वतन्त्रमार्गविरोधो बहुधा दृश्यते । 'द्वादशाहवदुभयविधं बादरायण' इति सूत्रीयमध्वभाष्ये द्वादशाहः क्रत्वात्मकः सत्रात्मकः इति लिखितम्, तत् 'अहीनसत्ररूपेण उभयविधो द्वादशाह'इति पूर्वतन्त्रलेखनविरुद्धं क्रतुत्वस्य सत्रव्याप्तत्वेन तेनाकारेण क्रत्वात्मकस्सत्रात्मक इति पक्षद्वयलेखनमयुक्तम्। 'लिङ्गभूयस्त्वात्सूत्रे' 'वक्ष्ठी-

यहिंसायाः इतिकर्त्तव्यतात्वेन प्राबल्या'दिति तत्वप्रकाशिकायां लिखितं, तत्, हिंसायाः इतिकर्त्तव्यतात्वमिति पूर्वतन्त्रे कुत्राप्य-लिखितत्वात् पूर्वतन्त्रविरुद्धम्। 'भूम्नः क्रतु'रिति सूत्रे तत्वप्रकाशिकायां दीक्षणीयाप्रायणीयोदयनीयप्रवनत्रयावभृथात्मकस्य क्रतोरिति लिखितं तदपि पूर्वतन्त्रविरुद्धं, तथा पूर्वतन्त्रे कुत्राप्य-लेखनात् 'स्वामिनः फलश्रुते'रित्यधिकरणे अयजमानानामपि ऋत्विजां सत्रयागफलमेवेतिलिखितं तदपि पूर्वतन्त्रविरुद्धं, सूत्रे 'ये यजमानास्ते ऋत्विज' इतिवचनेन ऋत्विजा यजमानत्वेन अयज-मानत्वाभावात्,आनन्दमयाधिकरणे न्यायसुधायां 'ज्योतिरुपक्रमा-धिकरणे तत्वप्रकाशिकाया 'ज्योतिषां स्तोमोहि ज्योतिष्टोम'इति लिखितम्। तदपि पूर्वतन्त्रोदाहृतश्रुतिविरुद्धं 'त्रिवृत्पंचदशसप्तदश-एकविंशाः एतानि वाव ज्योतींषि य एतस्य स्तोमाः' इति पूर्वतन्त्रो दाहृतताण्डिमहाब्राह्मणवाक्यबलेन ज्योतिष्टोमपदस्य बहुव्रीहित्वा-वगमेन ज्योतिषां स्तोम इतितत्पुरुषस्यासङ्गतत्वात्। नच मीमांसक-रीतिर्माध्वैर्नाङ्गीक्रियते अतस्तदुल्लङ्घनं न दोषायेति वक्तुं शक्यम्।

'अङ्गीकृतत्वादपि तैः पदार्थानां पृथक्पृथक्।
क्रियापदेनान्वयस्य वाक्यभेदो हि दूषणम्'॥

इति अनुव्याख्यानश्लोकेन 'मीमांसकमतेपीदं समान'मित्य-न्तेन श्लोकेन'उच्यते इत्यादिना महावाक्यभेद एव दूषणं न स्ववान्तभेद इति तदस्माकमिति समान'मित्यन्तेन सुधाग्रन्थेन च मीमांसकसिद्धान्तरीतेः स्वोक्तार्थसाक्षित्वेन कथनात्।

अत्रायं कक्ष्याक्रमः अकृतकर्मविचारस्यापि ब्रह्मवि चारे अधीतोपनिषत्प्रतीताऽऽपातार्थनिर्णयार्थं प्रवृत्तिसम्भ-वेन ब्रह्मविचारे कर्मविचारानन्तर्यमसङ्गतमिति प्रथमकक्ष्या, येन पुरुषेण भेदलक्षणविचारमकृत्वा उपदेष्टृवचनेन कर्मभेदं

विज्ञाय शेषलक्षणविचारः क्रियते, तादृशपुरुषविषये भेदविचारस्य अङ्गत्वविचारनिरूपितपूर्ववृत्तित्वनियमाभावेन 'अथाऽतः शेषलक्षणम्'इत्यत्राऽथशब्दस्य भेदविचारानन्तर्यार्थत्वाभावप्रसक्त्या यादृशपुरुषविशेषमादाय भेदविचारस्य पूर्ववृत्तित्वं सम्भवति तदभिप्रायेणाऽथशब्दस्याऽऽनन्तर्यार्थत्ववत् 'अथाऽतो ब्रह्मजिज्ञासा'इत्यत्राऽपि येन कर्मविचारानन्तरमेव ब्रह्मविचारः क्रियते तमादाय कर्मविचारानन्तर्यं अथशब्दार्थ इति वक्तुं युक्तमेवेति द्वितीया कक्ष्या ।

'अथाऽतः शेषलक्षणम्'इत्यत्राऽथशब्दस्य भेदविचारानन्तर्यार्थत्वे कर्मभेदविचारकर्माङ्गत्वविचारयोः हेतुहेतुमद्भावो नियामकः, प्रकृते कर्मविचारब्रह्मविचारयोः हेतुहेतुमद्भावे नियामकादर्शनात् न कर्मविचारानन्तर्यं अथशब्दार्थो भवतीति तृतीया कक्ष्या ।

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'इति श्रुतिः इष्यमाणवेदने यज्ञादिकर्मणां साधनत्वसमर्पिका कर्मब्रह्मविचारयोः हेतुहेतुमद्भावे नियामिका, कर्मसाध्यब्रह्मज्ञानविचारे कर्मविचारसाध्यत्वस्याऽप्यावश्यकत्वादिति चतुर्थी कक्ष्या ।

'तमेतम्—'इति वाक्येन शब्दतः प्रधानभूतायां वेदनेच्छायां यज्ञादिसाध्यत्वं प्रतीयते, न त्वर्थतः प्रधाने इष्यमाणवेदने, राजपुरुषमानयेत्यादौ अर्थतः प्रधानं राजानं परित्यज्य शब्दतः प्रधाने पुरुषे एव आनयनान्वयदर्शनादिति पञ्चमी कक्ष्या ।

'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'असिना जिघांसति'-इत्यादाविव तृतीयान्तसाधनवाचिपदघटितवाक्ये तदर्थसाध्यत्वस्य अर्थतः प्रधान एवाऽन्वयो न्याय्यः, राजपुरुषमानयेत्यादिकं तु

न तथेति षष्ठी ।

'तमेतम्—' इतिश्रुतिसिद्धमिष्यमाणवेदनं भवदभिमतब्रह्मान्ते उपासनात्मकं यज्ञादिकर्मसाध्यं, जिज्ञासासूत्रस्थमिष्यमाणवेदनं तु विचारात्मकमिति कथं तच्छ्रुतिसिद्धहेतुहेतुमद्भावो नियामकः स्यात् ? किं च 'अथाऽतो ब्रह्मजिज्ञासा' इति सूत्रस्य 'असिना जिघांसति' इत्यादिवत् तृतीयान्तपदघटितत्वाभावेन अर्थतः प्रधाने इष्यमाणवेदने अथशब्दार्थानन्तर्यस्य अन्वयानुपपत्त्या राजपुरुषमानयेत्यादाविव शब्दतः प्रधाने ज्ञानेच्छायामेव अथशब्दार्थानन्तर्यापत्तिश्च स्यादिति सप्तमी कक्ष्या ।

नित्यानित्यवस्तुविवेकाद्यानन्तर्यं नाऽथशब्दार्थो भवितुमर्हति, नित्यानित्यवस्तुविवेकस्य ब्रह्मविचारोत्तरभावित्वेन तन्निरूपितपूर्वत्वाभावादिति प्रथमा कक्ष्या ।

निश्चयात्मकानित्यानित्यवस्तुविवेकस्य विचारोत्तरभावित्वेऽपि सम्भावनात्मकस्य तस्य विचारनिरूपितपूर्ववृत्तित्वसम्भवेन तदानन्तर्यमथशब्दार्थो भवेदेवेति श्रीमच्छङ्करभगवत्पादमतानुसारिणां द्वितीया कक्ष्या ।

सम्भावनात्मकस्य तस्य ब्रह्मज्ञानफलं नित्यमनित्यं वेतिसंशयरूपत्वादिहामुत्रार्थफलभोगविरागं प्रति अहेतुतया भवदभिमतं वैराग्योत्पादकत्वेन विवेकस्य पूर्ववृत्तित्वं न सिद्ध्यतीति तृतीया कक्ष्या ।

ब्रह्मज्ञानफलं नित्यमनित्यं वेति सम्भावनायां नित्यत्वकोटिरुत्कटत्वेन अनित्यत्वकोटिरनुत्कटत्वेन भासते, तथा यज्ञदानादिफलं अनित्यं नित्यं वेति सम्भावनाया अनित्यत्वकोटिरुत्कटत्वेन नित्यत्वकोटिरनुत्कटत्वेन विचारात्प्राक् अधीतसाङ्गस्वशिरस्कस्वाध्यायस्य भासते, उत्कटत्वमनुत्कटत्वं च जातिविशेषः,

तथैवोपपादितं भाट्टरहस्ये खण्डदेवमिश्रैः ॥ तथाऽत्र एवं-रूपसम्भावनात्मकनित्यानित्यवस्तुविवेकस्य संशयत्वाभावाच्च विचारात्पूर्वमेव वैराग्योत्पादकत्वं सम्भवतीति चतुर्थी कक्ष्या ।

अधीतसाङ्गसशिरस्कस्वाध्यायस्य विचारात्प्रागुक्तसम्भावनोत्पत्तौ नियामकाभाव इति पञ्चमी कक्ष्या ।

ज्ञानकाण्डे 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते','प्लवा ह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म, एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरां मृत्युं ते पुनरेवाऽपि यन्ति'इत्यादिकर्मफलानित्यत्वप्रतिपादकं वाक्यं, 'न स पुनरावर्तते','अन्नादो वसुदानो विन्दते वसु य एवं वेद'इति ज्ञानफलनित्यत्वादिप्रतिपादकवाक्यैः साकमुपलभ्यते, कर्मकाण्डे 'स्वर्गकामो यजेत,''उद्भिदा यजेत पशुकामः,''हिरण्यदा अमृतत्वं भजन्ते,''अपाम सोमममृता अभूम'इत्यादिकर्मफलानित्यत्वानित्यत्वप्रतिपादकवाक्यमात्रमुपलभ्यते, न तु ज्ञानफलानित्यत्वप्रतिपादकं वाक्यं, अत एव नियामकात् नित्यानित्यवस्तुविवेकः सम्भावनात्मको विचारात्पूर्वं सम्भवत्येवेति सुष्ठूक्तं विवेकाद्यानन्तर्यमथशब्दार्थ इति भगवता भाष्यकारेणेति षष्ठी कक्ष्या ।

अथशब्दोक्तानन्तर्यप्रतियोगितितिक्षां विषयालम्बुद्धिरूपां वदन्ति आचार्यवाचस्पतिमिश्राः, सन्यासरूपां वदन्ति विवरणाचार्याः । स च सन्यासः उपनीतवत् अनुपनीतस्याऽपि सम्भवति, 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्,'

'यदा मनसि वैराग्यं जायते सर्ववस्तुषु ।

तदैव सन्यसेद्विद्वानन्यथा पतितो भवेत्—'

इति श्रुतिस्मृतिभ्यां वैराग्यमात्रस्यैव सन्यासं प्रति हेतुत्वावगमेन उपनयनादेस्तदप्रयोजकत्वात् । न च वेदाध्यय-

नन्वेवं उपनीताधिकारित्वात् अनुपनीतसंन्यासिनः उपनिषद्रूप-वेदाध्ययनासम्भवात् कथमुपनिषदर्थविचारः सम्भवतीति वाच्यम् । 'सर्वेषु वेदेष्वारण्यमावर्तयेदुपनिषदावर्तयेत्' इति श्रुत्या अनुपनीतसंन्यासिनो वेदान्तविचारार्थं उपनिषदध्ययनविधानादिति प्रथमा कक्ष्या ।

'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्, यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा—' इति जाबालश्रुतिवाक्याभ्यां अपक्वकषायपक्वकषायविषयाभ्यां संन्यासे ब्रह्मचारिगृहस्थवानप्रस्थान्यतमाधिकारिकत्वबोधनेन उक्तान्यतमत्वसमानाधिकरणवैराग्यं सन्यासनिमित्तं, न तु वैराग्यमात्रं, अन्यथा शूद्रादीनामपि सन्यासे अधिकारापत्तेः । 'यदहरेवैनं श्रद्धोपनमेत् तदाऽऽदधीत' इति श्रुतेः 'यदहरेव विरजेत्' इतिश्रुतिसमानस्वभावतया श्रद्धाव्यतिरिक्तब्राह्मणत्वसम्भारादिकमाधाने अनपेक्ष्यमित्यर्थत्वापत्तेः नाऽनुपनीतस्य सन्यासेऽधिकार इति द्वितीया कक्ष्या ।

'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतौ द्वितीयैवकारेण वैराग्यकालव्यतिरिक्तस्य सर्वस्याऽपि प्रव्रजननिमित्तत्वप्रतिषेधात् उपनयनस्याऽपि प्रतिषिद्धत्वं सिध्यति, 'यदहरेवैनं श्रद्धोपनमेत्तदाऽऽदधीत' इत्यत्र तदैवेत्येवकारादर्शनेन श्रद्धाव्यतिरिक्तस्याऽप्रतिषेधात् ब्राह्मणत्वसम्भारादिकं न प्रतिषिद्धमिति सम्भारोपनयनाद्यपेक्षा आधान इति वक्तुं शक्यम् । किञ्च—

'यदा मनसि वैराग्य जायते सर्ववस्तुषु ।
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत्—'

इति स्मृतौ वैराग्यकालमात्र एव संन्यासाकरणे पातित्यरूपप्रत्यवायबोधनं चाऽस्ति, अतः वैराग्यव्यतिरिक्तस्य संन्यासे

अन्वेषणमेव । शूद्रस्य सन्न्यासाधिकारस्तु न सम्भवति, संन्यासस्य त्रिवर्णमात्राधिकारत्वश्रवणादिति तृतीया कक्ष्या ।

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति शेषे षष्ठी, न तु कर्मणि षष्ठी, ब्रह्मसम्बन्धिसाधनादिविचारस्य उपरि क्रियमाणत्वेन साधनादेः प्रतिज्ञातत्वावश्यकतया कर्मणि षष्ठीपक्षे ब्रह्ममात्रस्य प्रतिज्ञातत्वसिद्धावपि साधनादीनां प्रतिज्ञातत्वासिद्धेरिति प्रथमा कक्ष्या ।

यैर्जिज्ञासितैर्विना यज्जिज्ञासितं न भवति, तस्य प्रतिज्ञातत्वेऽपि तेषामपि अर्थादेव प्रतिज्ञातत्वसिद्ध्या कर्मणि षष्ठीपक्षेऽपि प्रधानभूतब्रह्मणः प्रतिज्ञातत्वे साधनादीनामपि प्रतिज्ञातत्वसिद्धेः कर्मणि षष्ठ्येवोचितेति अद्वैतिनां द्वितीया कक्ष्या ।

'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्तिकेन कृद्योगषष्ठ्याः समासनिषेधेन कर्मणि षष्ठी न युक्तेति तृतीया कक्ष्या ।

'कृद्योगा च षष्ठी समस्यते' इति वार्तिकेन प्रतिप्रसवलाभात् न समासानुपपत्तिरिति चतुर्थी कक्ष्या ।

कर्मणि षष्ठीपक्षे ब्रह्मणो जिज्ञासाविषयस्य सिद्धिवत् ब्रह्मणि जिज्ञासा ब्रह्मजिज्ञासेति विषयसप्तमीसमासपक्षेऽपि ब्रह्मणो जिज्ञासाविषयत्वसम्भवात् सप्तमीसमास एव किं न स्यादिति पञ्चमी कक्ष्या ।

प्रथमातिक्रमे कारणाभावात् उभयोरेककार्यत्वेऽपि षष्ठीसमास एव उचित इति षष्ठी कक्ष्या ।

यदि प्रथमातिक्रमे कारणाभावात् षष्ठीसमास आश्रीयते, ततोऽपि प्रथमत्वात् ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमास एव किं न स्यात् ? न च चतुर्थीसमासे यूपाय दारु-यूपदार्वित्यादौ प्रकृतिविकारभावस्य नियामकत्वदर्शनात्

प्रकृते तदभावात् न चतुर्थीसमास इति चेन्न, 'अश्वघासादावुपसङ्ख्यानम्' इति वार्तिकेन प्रकृतिविकृतिभावशून्ये अश्वघासादौ चतुर्थीसमासाय यत्नः कर्तव्य इत्यर्थकेन 'धर्मनियमः' इति-वार्तिकविवरणावसरे महाभाष्ये धर्माय नियम इति समासोक्त्या च प्रकृतेऽपि चतुर्थीसमासाश्रयणसम्भवात्। शाबरभाष्ये धर्मजिज्ञासासूत्रे धर्माय जिज्ञासा धर्मजिज्ञासेति चतुर्थीसमासाश्रयणाच्चेति सप्तमी कक्ष्या।

जिज्ञासायाः कर्माकाङ्क्षत्वेन कर्मणि षष्ठीसमासपक्ष एवैतादृशाकाङ्क्षानिवृत्तेः स एव आश्रयणीयः, चतुर्थीसमासपक्षे ब्रह्मणि प्रयोजनत्वलाभेऽपि जिज्ञासापदेन प्रथमं प्रयोजनस्याऽनाकाङ्क्षितत्वात्। न च तर्हि शाबरभाष्यस्य का गतिरिति वाच्यम्, जिज्ञासापदस्य द्वावर्थौ—वाच्यो लक्ष्यश्च, आद्यो ज्ञानेच्छा, स च कर्मसाकाङ्क्षः, द्वितीयो विचारः, स च प्रथमं फलसाकाङ्क्षः, जिज्ञासापदेन लक्ष्यार्थविचारमादाय धर्माय जिज्ञासेति चतुर्थीसमासाश्रयणं, वाक्यार्थमादाय 'तस्य हि ज्ञातुमिच्छा' इति तदुपरितनशाबरभाष्यमिति तत्राऽनुपपत्त्यभावात्, एवमेव शाबरभाष्यगतिरुक्ता श्रीशाङ्करभाष्यव्याख्याने रामानन्दीय इति अष्टमी कक्ष्या।

तर्हि ब्रह्मजिज्ञासासूत्रेऽपि लक्ष्यार्थविचारमादाय चतुर्थीसमासः स्यादिति नवमी कक्ष्या।

'तद्विजिज्ञासस्व तद्ब्रह्म' इति वाक्यस्य ब्रह्मजिज्ञासासूत्रविषयवाक्यत्वात् सूत्रस्य च समानार्थत्वानुरोधेन कर्मत्ववाचकद्वितीयास्थाने कर्मत्ववाचकषष्ठ्या एव निवेशौचित्येन कर्मणि षष्ठीसमासस्यैव स्वीकार्यत्वात्, धर्मजिज्ञासासूत्रे तु तद्विषयीभूत—'स्वाध्यायोऽध्येतव्यः' इति वाक्ये स्वाध्यायस्य तव्य-

प्रत्यक्षेण, कर्मत्वबोधनेऽपि धर्मस्य, तद्बोधनाभावात् 'धर्माय जिज्ञासा' इति चतुर्थीसमासोऽपि सम्भवतीति शाबरभाष्ये तथोक्तिरिति । वस्तुतस्तु कथं तर्ह्यश्वघास इत्यनाशङ्क्यं, तत्राऽपि चतुर्थीसमाससिद्ध्यर्थं पृथग्वचनं न कर्तव्यं, षष्ठीसमासेनैव तद्रूपसिद्धेरिति महाभाष्ये अश्वघासादौ षष्ठीसमासोक्त्या प्रकृतिविकृतिभावशून्ये चतुर्थीसमासो वार्तिकोक्तो न युक्तः, 'धर्माय नियमः' इति महाभाष्ये समासोक्तिरपि षष्ठीसमाससिद्ध-षष्ठ्यर्थसम्बन्धस्य तादर्थ्यरूपत्वज्ञापनार्था । अन्यथा उक्तभाष्य-विरोधापत्तेः । शाबरसमासोक्तिरपि एतदभिप्रायैव । अत एव शाबरे तस्य हि ज्ञातुमिच्छेति उत्तरत्र वचनमिति दृशा-मी कक्ष्या ।

केनचिदंशेन केनचिद्धर्मेण वा ज्ञाते अंशान्तरेण धर्मान्तरेण वा अज्ञाते खलु जिज्ञासा सम्भवति, निरंशे निर्विशेषे च ब्रह्मणि कथं जिज्ञासा सम्भवेत् ? तथा च तस्मिन् जिज्ञासासूत्रमसङ्गत-मिति प्रथमा कक्ष्या ।

यद्विषयकं ज्ञानं संशयरूपं जायते तन्निर्णयाय तस्मिन् जिज्ञासेत्याभाणकः । संशयत्वं च सन्दिहानीत्यनुभवसिद्धविष-यिताविशेषः निर्विकल्पकसविकल्पकसाधारणः, 'साक्षात्करोमि', 'अनुमिनोमि', 'उपमिनोमि', 'शाब्दयामि', 'कल्पयामि', 'प्रमिणो-मि' इत्यनुव्यवसायसिद्धलौकिकविषयिताविधयितादिविशेषरूपप्र-त्यक्षत्वानुमितित्वादिवत् । न च प्रमात्वादीनां अन्यादृशं रूपं वि-वरणादिषूक्तं विरुध्येतेति शङ्क्यम्, उक्तरीत्या अनुव्यवसायरूप-प्रमाणबलेन प्रमात्वादीनां विषयिताविशेषरूपत्वसिद्धौ विवरणा-दिषु रूपान्तरोक्तेः मतान्तरानुवादत्वात् । ननु संशयत्वस्य निर्वि-कल्पकसविकल्पकसाधारणविषयिताविशेषरूपत्वं माऽस्तु, किन्तु

विशिष्टानेकधर्मप्रकारकैकविशेष्यकज्ञानस्वरूपस्यैव अस्त्विति चेन्न। तर्हि मनोरूपेन्द्रियायोग्यानन्तवस्तुघटितत्वेन इन्द्रियजन्यज्ञानत्वादिरूपप्रत्यक्षत्वादीनां 'साक्षात्करोमि' इत्यादिमानसप्रत्यक्षात्मकसार्वजनीनानुभवारोहासम्भवात् । तथा च 'केवलो निर्गुणश्च', 'यस्याऽमतं तस्य मतं—', 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते', 'नाश्च कांचन भिदाऽस्ति', 'एकधैवाऽनुद्रष्टव्यम्' इत्यादिभिः सर्वधर्मनिषेधकैः उपनिषद्वाक्यैः निर्विशेषविषयकं अत एव निर्विकल्पात्मकं संशयापरनामधेयं आपातज्ञानं यस्य जायते तस्य तन्निर्णयाय तज्जिज्ञासा जायत इति तं जिज्ञासुमुपलभमानो भगवान् बादरायणः 'अथाऽतो ब्रह्मजिज्ञासा' इति सूत्रयामास । उक्तवाक्यजन्यनिर्विकल्पकज्ञानस्य संशयरूपत्वे तादृशज्ञानोत्तरं 'सन्दिहानि' इत्यनुव्यवसाय एव प्रमाणम् । यस्य तु पुरुषधौरेयस्य नितान्तविमलस्वान्तस्य श्रीरामचन्द्रकृपाकटाक्षवीक्षणादेवोदाहृतोपनिषद्वाक्यैरनापातापरनामधेयं निश्चयात्मकमेव ज्ञानं प्रथमं जायते, न तस्य जिज्ञासाशास्त्रेऽधिकारः । निश्चयत्वं च निश्चिनोमीत्यनुव्यवसायसिद्धविषयिताविशेष एव । यद्यप्युदाहृतोपनिषद्वाक्यजन्यं संशयज्ञानं निश्चयज्ञानं च निर्विशेषब्रह्ममात्रविषयकं निर्विकल्पकमेव, तथाऽपि निर्विशेषब्रह्मरूपविषयैक्येऽपि तयोर्ज्ञानयोर्ब्रह्मनिरूपितविषयिता परस्परविलक्षणैव, 'सन्दिहानि', 'निश्चिनोमि' इति तत्तदनुव्यवसायात्मकफलवैलक्षण्यात् । तदेतत्सर्वं श्रीगौडब्रह्मानन्दसरस्वतीकृतबिन्दुटीकायां तत्कृतब्रह्मसूत्रमुक्तावल्यां च स्पष्टम् ।

ऐकशास्त्र्यवादे अनन्ताचार्यैश्च स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व—स्वसामानाधिकरण्योभयसम्बन्धेन विषयताविशिष्टविषयता संशयत्वं, न तु ब्रह्मानन्दोक्तरी-

त्वा निर्विकल्पकसविकल्पकसाधारणोक्तानुव्यवसायासिद्धविषयि-
ताविशेषः, तस्य कल्पनीयत्वेन गौरवात्, अनुव्यवसायसामा-
न्यस्य सप्रकारकज्ञानविषयतया निर्विकल्पकविषयकस्य 'सन्देह्मि'
इत्यनुव्यवसायस्याऽसम्भवाच्चेत्युक्तम्,

तन्न, अतीन्द्रियानेकपदार्थघटितसम्बन्धद्वयघटितत्वादुक्तसं-
शयत्वस्य संदेह्मीत्यनुव्यवसायप्रत्यक्षविषयत्वानुपपत्तेः, निर्विक-
ल्पकवत् सविकल्पकस्याऽपि ज्ञानत्वाविशेषेण साक्षिभास्यत्वाव-
श्यकतया वेदान्तिमते च साक्षिण एवाऽनुव्यवसायत्वात्। सा-
क्षिणश्च प्रत्यक्षरूपत्वमेव वेदान्तिमते। विशिष्टाद्वैतित्वन्मते सप्रका-
रस्यैव निर्विकल्पकज्ञानतया न्यायशास्त्रविरोधः। तस्मिन् नि-
र्विकल्पकत्वं विरुद्धं, तथा च निर्विशेषे निरंशे च ब्रह्मणि संशयसं-
भवात् तन्निर्णयार्थं जिज्ञासासूत्रं उपपन्नतममिति द्वितीया कक्ष्या।

भवदभिमतं संशयज्ञानं शब्दान्नोत्पत्तुमर्हति, प्रत्यक्षस्यैव
संशयत्वादिति तृतीया कक्ष्या।

शाब्दे संशयत्वमानुभविकं, अत एव विप्रतिपत्तिवाक्यात्
संशयमाहुः सम्प्रतिपन्ना इति चतुर्थी कक्ष्या।

शाब्दबोधे तात्पर्यनिर्णयस्य हेतुत्वात् तात्पर्यनिर्णयजन्य-
शाब्दबोधस्य कथं संशयत्वमिति पञ्चमी कक्ष्या।

दोषविधया शाब्दसंशयहेतोस्तात्पर्यसंशयस्याऽप्रमारणद्वारा
तात्पर्यनिर्णयस्य शाब्दनिश्चयत्वावच्छिन्नं प्रति हेतुत्वेऽपि शाब्द-
त्वावच्छिन्नं प्रत्यहेतुत्वात् शाब्दसंशयोत्पत्तिः। तदेतत् श्रीगौड-
ब्रह्मानन्दकृतसूत्रमुक्तावल्यां स्पष्टमिति षष्ठी कक्ष्या।

निर्विशेषस्य शब्दगोचरत्वाभावेन निर्विशेषविषयकशाब्द-
संशयो वा निश्चयो वा नोत्पत्तुमर्हतीति सप्तमी कक्ष्या।

'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पातञ्जल-

सूत्रे निःस्वरूपस्याऽपि शशशृङ्गादेः शब्दजन्यविकल्पाख्य-वृत्तिविषयत्वोक्त्या सन्मात्ररूपस्य निर्विशेषस्य शब्दजन्यवृत्तिवि-विषयत्वस्य कैमुतिकन्यायसिद्धत्वादित्यष्टमी कक्ष्या ।

एतेन जीवाभिन्ने अतएव स्वप्रकाशे ब्रह्मणि न संशय-जिज्ञासादिरित्यपास्तम्, घट–सुख–ज्ञानसाधारण्याय वृत्ति–विषयान्यतरोपहितप्रकाशस्य संशयानुत्पादप्रयोजकत्वरूपसंशय-विरोधित्वेऽपि स्वरूपप्रकाशस्याऽविरोधित्वात् ।

ब्रह्मजिज्ञासा धर्मजिज्ञासानिरूपितैकशास्त्र्यवती, तत्सङ्ग-तार्थत्वात्, तद्व्याख्येयवेदव्याख्यानत्वात्, तदुद्देश्यफलोद्देश्य-कप्रवृत्तिविषयत्वात्, तदर्थतात्पर्यक‘तदुक्तं–तदुक्तम्–’इत्यादिशै-लीघटितत्वात्, यद्यत्सङ्गतार्थं, यद्व्याख्येयव्याख्यानं, यदुद्देश्यक-फलोद्देश्यकप्रवृत्तिकं, यदर्थतात्पर्यक–‘तदुक्तं तदुक्तम्–’इत्यादि-शैलीघटितं, तत्तदैकशास्त्र्यवत्, यथा धर्मजिज्ञासासङ्गतप्रथम-द्वितीयाद्यध्यायतत्पादादिकमिति कश्चित् ।

तत्र न तावदाद्यो हेतुः सम्भवति, ब्रह्ममीमांसा-शास्त्रार्थप्रतिपादकात्याधुनिककल्पितश्लोकेषु धर्मजिज्ञासासङ्ग-तार्थकत्वहेतोः साध्यव्यभिचारित्वादिति प्रथमा कक्ष्या ।

तदुत्थाप्याकाङ्क्षानिवर्तकत्व—तन्निवर्तनीयाकाङ्क्षोत्थापक-त्वान्यतरवत्वे सति एकार्थत्वमैकशास्त्र्यं एकवाक्यत्वपर्यवसि-तम् । ‘घटोऽस्ति’, ‘कलशोऽस्ति’इत्यनयोरेकवाक्यत्ववारणाय सत्यन्तम् । ‘घटवद्भूतलम्’इत्यस्य ‘कीदृशो घटः?’इत्येतदुत्था-प्याकाङ्क्षानिवर्तक–‘कम्बुग्रीवादिमान् घटः’इति वाक्यस्य च एक-वाक्यत्ववारणाय विशेष्यदलम् । धर्मजिज्ञासोत्थाप्यायाः ‘स्व-प्रतिपाद्यधर्माराध्यः कः?’इत्याकारिकायाः, ‘धर्माङ्गकं किम्?’-इत्याकारिकाया वा आकाङ्क्षाया निवर्तिका ब्रह्मजिज्ञासा

भवतीति धर्मब्रह्मजिज्ञासे 'कर्माराध्यं ब्रह्म', 'कर्माङ्गकं ब्रह्मोपासनम्-'इत्यर्थके भवत इति धर्मब्रह्मजिज्ञासयोरैकशास्त्र्यम् । तदेतदुक्तश्लोकेष्वप्यस्तीति न व्यभिचार इति द्वितीया कक्ष्या।

उक्तैकवाक्यत्वस्य ऐकशास्त्र्यवाद्यभिमते यदेकसमाप्त्युद्देश्यकप्रवृत्तिविषयत्वात्मकैकग्रन्थत्वरूपैकशास्त्र्यं, तद्रूपत्वाभावेन तस्य, एकग्रन्थत्वस्य चोक्तश्लोकेष्वभावेन व्यभिचारानुद्धारात्, 'श्रुतिशिखोत्थाखण्डधीगोचरः'इत्यद्वैतसिद्धिपद्यपदविवरणलघुचन्द्रिकोक्तरीत्या अद्वैतिनामपि 'तदुत्थाप्य-'इत्युक्तभवदुक्तैकशास्त्र्यस्याऽभिमतत्वेन तान् प्रत्येतत्साधने सिद्धसाधनप्रसङ्गात्, अर्थान्तरप्रसङ्गाच्चेति तृतीया कक्ष्या ।

नाऽपि द्वितीयो हेतुः समीचीनः, भट्टभास्करवेदभाष्यप्रवृत्त्युद्देश्यचरमवर्णध्वंसरूपसमाप्त्युद्देश्यकत्वरूपतदेकग्रन्थत्वाभाववति श्रीविद्यारण्यकृतवेदभाष्ये भास्करभाष्यव्याख्येयवेदव्याख्यानत्वरूपहेतोः सत्त्वेन व्यभिचारात् ।

नाऽपि तृतीयः, साङ्ख्यशास्त्रनिरूपितैकशास्त्र्यशून्ये योगशास्त्रे साङ्ख्यशास्त्रोद्देश्यमोक्षहेतुज्ञानोद्देश्यकप्रवृत्तिविषयत्वसत्त्वेन व्यभिचारात्, साङ्ख्ययोगशास्त्रयोः मोक्षहेतुसम्यग्ज्ञानार्थमेव प्रवृत्तत्वात् ।

नाऽपि चतुर्थः, धर्मजिज्ञासानिरूपितैकशास्त्र्यशून्ये 'ब्रह्मजिज्ञासा धर्मजिज्ञासानिरूपितैकशास्त्र्यवती, तदर्थतात्पर्यक-'तदुक्तं तदुक्तम्-'इत्यादिशैलीघटितत्वात्'इत्याकारके प्रतिज्ञाहेतुसमुदाये 'तदर्थतात्पर्यक-'तदुक्तं तदुक्तम्-'इतिशैलीघटितत्वरूपहेतोः सत्त्वेन व्यभिचारात् ।

वस्तुतस्तु भवदुक्तानां चतुर्णामपि हेतूनामैकशास्त्र्याभावसाधकप्रतिहेतुग्रस्तत्वेन सत्प्रतिपक्षितत्वान्नैकशास्त्र्यसाधकत्वम् ।

तथा हि—'अथातो ब्रह्मजिज्ञासा' न धर्मजिज्ञासामहत्त्वुद्देश्यचरमवर्ण-ध्वंसरूपसमाप्त्युद्देश्यकप्रवृत्तिविषयत्वरूपधर्मजिज्ञासानिरूपितैक-ग्रन्थत्वरूपैकशास्त्र्यवती, 'यथा सम्प्रैषो याज्यानां यथा सम्प्रैषो याज्यानाम्'इतिपूर्वतन्त्रीयषोडशाध्यायान्त्यसूत्राभ्यास-सूचितसमाप्तिविशिष्टधर्मजिज्ञासाशास्त्रकत्वात्, यदेवं तदेवं, यथोभयवादिसम्प्रतिपन्नम् ।

न च सूत्राभ्यासस्य शास्त्रसमाप्तिद्योतकत्वमेव नाऽस्तीति शङ्क्यम्, श्रीशाङ्करश्रीभाष्य इव रामानुजभाष्ये भाष्यान्तरे च 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्'इति सूत्र-विवरणावसरे रामानुजाचार्यादिभिः 'सूत्राभ्यासः शास्त्रस-माप्तिं द्योतयति'इत्युक्तत्वात् ।

न च कर्ममीमांसकैः 'यथा सम्प्रैषः—'इति सूत्रस्य अ-न्त्यत्वेन पठितत्वेऽपि विशिष्टाद्वैतिभिः तस्य न तथा पठि-तत्वमिति शङ्क्यम्, तैरपि माध्ववत् 'स विष्णुराह हि'इत्युपा-न्त्यसूत्रं पठित्वा 'तं ब्रह्मेत्याचक्षते'इति पूर्वतन्त्रीयषोडशा-ध्यायान्त्यसूत्रस्य अभ्यासेन पठितत्वात् ।

यत्तु श्रुतप्रकाशिकायां जैमिनिरीत्या शास्त्रभेदेऽपि बादरायणरीत्या ऐक्यमेव, पश्चात् ग्रामनिर्मातुः पूर्वसिद्धतत्र-त्यतटाकावेक्षावत् पूर्वसिद्धजैमिनीयशास्त्रमवेक्ष्य शारी-रकस्य बादरायणेन कृतत्वात्, 'प्रदानवदेव तदुक्तं'इत्यादौ बादरायणेन जैमिनिन्यायोऽवेक्षित इति स्पष्टमित्युक्तम् ।

तन्न, 'विकारशब्दान्नेति चेन्न प्राचुर्यात्'इति सूत्रेण वि-कारावयवयोश्च 'तत्प्रकृतवचने मयट्'इति पूर्वसिद्धपाणिनिसू-त्रापेक्षादर्शनात् तत्सूत्रेणाऽपि शारीरकस्य ऐकशास्त्र्यापत्तेः ।

एतेन उत्तरतन्त्रे 'प्रदानवदेव तदुक्तम्'इति सूत्रे आह-

रायणेन पूर्वतन्त्रासिद्धार्थस्य 'तदुक्तम्'इति पदेनाऽनुकृष्टत्वात् तन्त्रयोरेकग्रन्थत्वमित्युक्तमपास्तम्। श्रीभाष्ये जिज्ञासाधिकरणे–'तदुक्तम्—

अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात्।
अविद्यायोगतश्चाऽऽत्मा ज्ञाताऽहमिति भासते–'

इति ग्रन्थे 'तदुक्तम्'इति पदेन यामुनाचार्यविरचितात्मसिद्धिग्रन्थार्थस्य रामानुजाचार्यानुकृष्टत्वात् यामुनाचार्यकृतात्मसिद्धिग्रन्थेन श्रीभाष्यग्रन्थस्यैकप्रबन्धत्वापत्तेः।

न च—

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश–'

इति याज्ञवल्क्यस्मृतिवचने पूर्वोत्तरमीमांसयोर्मीमांसात्वेन एकविद्यास्थानत्वपरिगणनात् ऐकशास्त्र्यमिति वाच्यम्। तद्वचने पुराणत्वेन अष्टादशपुराणानां एकविद्यास्थानत्वोक्तावपि ब्रह्मपुराणप्रवृत्त्युद्देश्यचरमवर्णध्वंसस्वरूपसमाप्त्युद्देश्यकप्रवृत्तिविषयत्वरूपब्राह्मपुराणैकग्रन्थत्वस्य शैववैष्णवादिपुराणेऽसिद्ध्या पूर्वोत्तरमीमांसयोरेकग्रन्थत्वरूपैकशास्त्र्यं प्रति तयोः मीमांसात्वेन एकविद्यास्थानत्वस्याऽप्रयोजकत्वात्।

एतेन न धर्मब्रह्मजिज्ञासयोरैकशास्त्र्यम्, 'अथाऽतो धर्मजिज्ञासा,' 'अथाऽतो ब्रह्मजिज्ञासा'इति प्रतिज्ञाभेदेनोपक्रान्तत्वात्, जैमिनिबादरायणरूपभिन्नकर्तृकत्वात्, परस्परविरुद्धार्थत्वात्'इति कैश्चित् प्रतिहेतव उपपादिताः, ते तावत् प्रतिहेतवोऽस्मदुक्तप्रतिहेतोः समीचीनत्ववत् तेषां समीचीनत्वाभावेन निरस्ता वेदितव्याः।

तथा-'हि तत्र न तावदाद्यो हेतुः समीचीनः, 'अथाऽतो धर्मजिज्ञासा'इत्यतः प्रतिज्ञायाः 'अथाऽतः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा'इति प्रतिज्ञायाः भेदेऽपि पूर्वतन्त्रे ऐकशास्त्र्यदर्शनात् ।

अथ सामान्यप्रतिज्ञावैधुर्यविशिष्टप्रतिज्ञाभेदः शास्त्रभेदकः, 'अथाऽतो धर्मजिज्ञासा'इति सामान्यप्रतिज्ञाविशिष्टत्वात् क्रत्वर्थपुरुषार्थजिज्ञासाया न शास्त्रभेदकत्वमिति चेत्, तर्हि 'यन्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः'इत्यापस्तम्बधर्मोक्तरीत्या आर्यकर्तृकप्रशंसाविषयत्वे सति क्रियमाणत्वं धर्मत्वमित्यवगत्या तादृशधर्मत्वस्य अग्निहोत्रादाविव रामानुजभाष्यीयजिज्ञासाधिकरण उपरिभागे 'अथाऽतो ब्रह्मजिज्ञासा'इति सूत्रस्य ब्रह्मोपासनायाः कर्तव्यत्वपरत्वं ब्रह्मणश्च तच्छेषतया शास्त्रप्रतिपाद्यत्वमिति पक्षान्तरस्य सिद्धान्ततयोक्तत्वेन तादृशपक्षरीत्या ब्रह्ममीमांसाशास्त्रतात्पर्यविषये ब्रह्मोपासनेऽपि सत्त्वात् अग्निहोत्रब्रह्मोपासनसाधारणधर्मत्वावच्छिन्नजिज्ञासा 'अथाऽतो धर्मजिज्ञासा'इति सूत्रेण प्रतिज्ञातेति वक्तुं युक्ततया धर्मजिज्ञासायाः साधारणप्रतिज्ञात्वात् ब्रह्मजिज्ञासायाश्च उक्तरीत्या विशेषप्रतिज्ञात्वात् साधारणप्रतिज्ञाविशिष्टत्वेन साधारणप्रतिज्ञावैधुर्यविशिष्टविशेषप्रतिज्ञात्वाभावेन शास्त्रभेदप्रयोजकत्वाभावात् ।

न द्वितीयः प्रतिहेतुः समीचीनः, जयादित्यकृताष्टाध्यायीपूर्वभागवृत्तेः वामनकृताष्टाध्याय्युत्तरभागवृत्तेश्च भिन्नकर्तृकत्वेऽपि एकप्रबन्धत्वदर्शनात् ।

नाऽपि तृतीयः प्रतिहेतुः समीचीनः, पूर्वतन्त्र एव रात्रिसत्राधिकरणार्थवादाधिकरणयोः अर्थवा-

दानां स्वार्थे प्रामाण्य-तदभावयोः स्वीकारेण विरुद्धार्थत्वेऽप्यै-कशास्त्र्यदर्शनात्।

न च 'धर्मं जैमिनिरत एव' इति शारीरके जैमिनिमतमुपन्यस्य 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' इति शारीरक एव जैमिनिमतखण्डनात् न जैमिनिबादरायणकृतयोः शास्त्रयोरेकप्रबन्धत्वमिति वाच्यम्। जैमिनिबादरायणयोः शिष्यगुरुभावस्य भारतादिप्रसिद्धत्वेन स्वशिष्यचर्चया शारीरकस्य निश्चितसम्यग्युक्तियुक्तत्वद्योतनाय जैमिनिचर्चायाः क्वचित् क्वचित् बादरायणोद्भावितत्वेऽपि तत्खण्डनस्य शास्त्रभेदासाधकत्वात्। अन्यथा 'इतरपरामर्शात् स इति चेन्नाऽसम्भवात्' इति स्वेनैव खण्ड्यचर्चामुद्भाव्य खण्डनात् बादरायणशास्त्रस्य स्वोद्भावितचर्चांशेन एकग्रन्थत्वानापत्तेरिति।

इति जिज्ञासाधिकरणमध्वचन्द्रिकाखण्डनं समाप्तम्।

सू० जन्माद्यस्य यतः १।१।२।

न तावदुपलभ्यमानं जगत् ब्रह्मणो लक्षणं, तस्याऽनित्याशुचिपरिच्छिन्नरूपस्य तद्विरुद्धब्रह्मलक्षणत्वानुपपत्तेः। नाऽपि नित्यत्वकारणत्वादिकं ब्रह्मलक्षणं, तस्यानुपलब्धेः-इति प्राप्ते,

माभूदनुभूयमानं जगत् ब्रह्मधर्मतया ब्रह्मात्मकतया वा तल्लक्षणं,जगदुत्पत्त्यादि तु भवति ब्रह्मलक्षणं,देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति अद्वैत्येकदेशिनः प्रवदन्ति।

यत्तु अनित्यस्य शब्दस्य नित्याकाशलक्षणत्वं दृश्यत इति अनित्याशुचिरूपस्य प्रपञ्चस्य ब्रह्मलक्षणत्वं सम्भवतीति,

तन्न, आकाशनित्यत्वस्य वेदान्तिमतेऽसिद्धेः।

यत्तु कारणत्वस्य जगद्वृत्त् आत्मस्वभावविरुद्धतया तल्लक्षणत्वानुपपत्तिरिति,

तन्न, विरुद्धस्वभावस्य स्वरूपलक्षणत्वासम्भवेऽपि तटस्थलक्षणत्वसम्भवात्, जगतोऽपि कारणत्वसम्बन्धेन लक्षणत्वस्येष्टत्वात्। पूर्वपक्षे जगतो लक्षणत्वासम्भवशङ्का तु स्वरूपलक्षणत्वाभिप्राया।

यत्तु जिज्ञास्यत्वेनाऽऽद्यसूत्रोक्तस्य निर्विशेषस्य जगद्भ्रमाधिष्ठानत्वेऽपि कारणत्वासम्भव इति,

तन्न, 'तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्, यदि प्रसिद्धं, न तर्हि जिज्ञासितव्यम्। अथ चाऽप्रसिद्धं नैव शक्यं जिज्ञासितुमिति ?, उच्यते, अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणम्, ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते, बृहतेर्धातोरर्थानुगमात्' इति जिज्ञासाधिकरणश्रीशाङ्करभाष्ये जिज्ञास्यब्रह्मणः 'नित्यशुद्धबुद्धमुक्तस्वभावम्' इति निर्विशेषरूपत्वमुक्त्वा 'सर्वज्ञं सर्वशक्ति–' इत्यादिना सगुणब्रह्मत्वोक्त्या सगुणस्याऽप्युपहितब्रह्मणः जिज्ञास्यत्वावगमेन तत्र कारणत्वसम्भवात्। श्रीशाङ्करभाष्यव्याख्याने रामानन्दीये उक्तभाष्यस्य 'परिच्छेदाभावरूपं नित्यत्वम्, अविद्यादोषशून्यत्वं शुद्धत्वम्, जाड्यराहित्यं बुद्धत्वम्, बद्धकालेऽपि स्वतो बन्धाभावो मुक्तत्वं च प्रतीयते। एवं सकलदोषशून्यं निर्गुणं प्रसिद्धम्, तथा सर्वज्ञत्वादिगुणकं च तत्पदवाच्यं प्रसिद्धम्, ज्ञेयस्य कार्यस्य च परिशेषे अल्पत्वप्रसङ्गेन सर्वज्ञत्वस्य सर्वकार्यशक्तिमत्त्वस्य च लाभात्–' इति जिज्ञास्यब्रह्मणः सगुणनिर्गुणपरतया व्याख्यानं दृश्यते।

एतेन अधिष्ठानत्वस्यैव विवक्षायां श्रुतिसूत्रयोः जन्मोक्त्ययोग इति परास्तम्, उपहितब्रह्मणि जगत्कारणत्वस्याऽपि विवक्षितत्वेन श्रुतिसूत्रयोर्जन्मोक्तिसाङ्गत्यात् ।

यत्तु देशान्तरप्राप्तेः सूर्यगत्यनुमापकत्वेऽपि तल्लक्षणत्वासम्भव इति,

तन्न, लिङ्गत्वस्य लक्षणत्वव्याप्यत्वेन तेन तत्सिद्धेर्निष्प्रत्यूहत्वात् । धूमोऽपि व्यापकतासम्बन्धेन वह्नेर्लक्षणमेव, 'वह्निरितरेभ्यो भिद्यते, व्यापकतासम्बन्धेन धूमवत्त्वात्'इति रीत्या धूमस्याऽपि व्यावर्तकत्वात् ।

यत्तु अतात्त्विकस्य कारणत्वस्य तात्त्विकब्रह्मलक्षणत्वासम्भव इति,

तन्न, अरुन्धत्यामसतस्तारासमूहविशेषत्वस्य तात्त्विकैकताराविशेषरूपारुन्धतीलक्षणत्वप्रसिद्धेः ।

अद्वैतिनस्तु 'जन्मादि'इत्यादिपदेन स्थितिभङ्गद्वयमेवोच्यते, न त्वन्यत्, 'यतो वा–'इत्यादिश्रुत्यनुसारादिति प्रवदन्ति ।

यत्तु 'यतो वा–'इति श्रुतौ उत्पत्तिस्थितिभङ्गप्रवेशानां चतुर्णां श्रवणान्नाऽऽदिशब्देन द्वयोरेव ग्रहणं युक्तं, किं तु प्रवेशस्याऽपि ग्रहणं न्याय्यमिति,

तन्न, जन्मादित्रयस्यैव श्रुतौ 'अभिसंविशन्ति'इति मुक्तप्राप्यत्वस्य स्वातन्त्र्येण पृथग्धर्मत्वोक्तौ 'यतः,' 'येन,' 'यत्'इति उत्पत्तिस्थितिसंहाराणां लक्षणत्वसिद्ध्यर्थं प्रातिपर्यायं यच्छब्देन ब्रह्मानुवादवत् 'यदभिसम्विशन्ति'इति सम्वेशनस्याऽपि लक्षणत्वसिद्ध्यर्थं चतुर्थेन यच्छब्देन ब्रह्मानुवादप्रसङ्गात् । 'यत् प्रयन्त्यभिसंविशन्ति'इत्यस्याऽर्थस्तु सूत्रमुक्तावल्यां ब्रह्मा-

नन्दैः 'प्रयन्ति—म्रियमाणानि भूतानि, यदभिसम्विशन्ति—यस्मिन् लीयन्ते—'इत्यादिना निरूपितः ।

एतेन 'न चाऽभिसम्विशन्तीत्येतदपि प्रलयपरम्—'इत्यादि-चन्द्रिकाग्रन्थः परास्तः ।

न च जन्माद्यष्टकैकस्याऽपि लक्षणत्वसमर्पकवाक्यान्तररीत्या जन्माद्यष्टकं एकैकमेव लक्षणमस्त्विति वाच्यम् । 'यतो वा—'इति श्रुतेः शब्दतोऽर्थतश्च जन्मादिसूत्रसारूप्येण प्रधानविषयवाक्यतया तदनुसारेण जन्मादित्रयस्य श्रीमदद्वैतभाष्ये लक्षणत्वाभिधानात् ।

एतेन—

'उत्पत्तिस्थितिसंहारौ नियतिर्ज्ञानमावृतिः ।

बन्धमोक्षौ च भवतो यस्मात् स हरिरेकराट्—'

इतिस्कान्दपुराणवचनानुसारेण जन्माद्यष्टकं जन्मादिसूत्रेण लक्षणमुच्यत इति मध्वमतमपास्तम्, श्रुत्यर्थनिर्णयार्थं प्रवृत्तस्य सूत्रस्य शब्दतोऽर्थतश्च सरूप—'यतो वा—'इत्यादिश्रुत्यनुसारेण प्रतीतं जन्मादित्रयलक्षणं परित्यज्य स्कान्दपुराणवचनबलेन जन्माद्यष्टकस्य सूत्रोक्तब्रह्मलक्षणत्वकल्पनस्य अत्यन्तानुचितत्वात्, पुराणे वेदोपबृंहणांशस्य वेदोपव्याख्यानत्वमेवेति प्रागेव सप्रमाणमुपपादितत्वाच्च । मध्वभाष्ये प्रथमं स्कान्दपुराणवचनं जन्मादिसूत्रे उपन्यस्य पश्चाच्छ्रुतिवाक्यं चोदाहृतवतां तद्भाष्यकृतां वेदापेक्षयाऽपि पुराणमेवाऽभ्यर्हितमित्याशयोऽवगम्यते ।

श्रीमच्छङ्करभगवत्पादसिद्धान्तरहस्यवेदिनस्तु जन्मादिकारणत्वं ब्रह्मणस्तटस्थलक्षणं, आनन्दादिकं स्वरूपलक्षणमिति प्रवदन्ति ।

लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानविशेष्यत्वं स्वरूपलक्षणत्वम् । तच्च 'सत्यं ज्ञानमनन्तम्–'इत्यत्र लक्ष्यवाचिब्रह्मपदसमानाधिकरणज्ञानपदनिरूपितवृत्तिग्रहविशेष्ये ज्ञानेऽस्तीति लक्षणसमन्वयः । ब्रह्म जगत्कारणत्वमित्यप्रयोगात् जगत्कारणत्वे नाऽस्तीति नाऽतिव्याप्तिः । तटस्थलक्षणत्वं च लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानाविशेष्यत्वे सति लक्षणत्वम् । तच्च कारणत्वादावस्तीति लक्षणसमन्वयः । लक्षणत्वं च लक्ष्यत्वेनाऽभिमतवस्तुविशेष्यकसंशयविपर्यासादिविरोधिज्ञानप्रकारत्वम् । तच्च 'ब्रह्म ज्ञानरूपं न वा'इतिसंशयविरोधिज्ञानविषये 'सत्यं ज्ञानम्–'इत्युक्तज्ञाने 'ब्रह्मणः कारणत्वमस्ति, नाऽस्ति'-इतिसंशयविरोधिज्ञानविषये कारणवाक्योक्तकारणत्वे चाऽस्ति । 'लक्ष्यवाचिपदसमानाधिकरण–'इत्यत्र सामानाधिकरण्यं लक्ष्यवाचिपदप्रवृत्तिनिमित्तधर्मसमानाधिकरणधर्मप्रवृत्तिनिमित्तकत्वं, न तु समानविभक्तिकत्वमात्रम् । अतो न 'शाखाग्रं चन्द्रमाः'इत्यद्वैत्यभिमततटस्थलक्षणे शाखाग्रे स्वरूपलक्षणलक्षणातिव्याप्तिः ।

एतेन 'लक्ष्यगतागते स्वरूपतटस्थलक्षणे–'इत्यादिः मध्वचन्द्रिकाग्रन्थः परास्तः, अनुक्तोपालम्भनत्वात् ।

यत्तु अर्थप्रकाशनसमर्थं ज्ञानं स्वरूपलक्षणमिति विवरणोक्तमयुक्तम्, अर्थप्रकाशनसामर्थ्यस्य शक्तिरूपत्वात् विषयानित्यत्वाच्च स्वरूपलक्षणत्वासम्भवात्, जगज्जन्मादिकारणत्वरूपसामर्थ्यस्यैव स्वरूपलक्षणत्वोपपत्तेश्चेति,

तन्न, अर्थप्रकाशनसामर्थ्योपेतज्ञानस्यैव विवरणग्रन्थे लक्षणत्वोक्त्या सामर्थ्यस्य स्वरूपलक्षणत्वानुक्त्या तत्सिद्धिमङ्गीकृत्य जगज्जन्मादिकारणत्वसामर्थ्यस्य स्वरूपलक्षणत्वोपपादनकथनस्याऽयुक्तत्वात् ।

यत्तु इतरव्यावृत्त्यर्थं आनन्दादेरिव कारणत्वस्याऽपि जिज्ञास्यत्वं वक्तव्यम्, अन्यथा समन्वयाविरोधाध्याययोः तद्व्युत्पादनं न स्यादिति,

तन्न, अध्यारोपापवादन्यायेन निर्विशेषस्वरूपप्रतिपत्त्यर्थमेव तद्व्युत्पादनोपपत्तेः ।

यत्तु सुखवत् कारणत्वमपि स्वाभाविकम्,

'क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चाऽपरे ।

देवस्यैष स्वभावोऽयं आप्तकामस्य का स्पृहा ?–'

इति श्रुतेरिति,

तन्न, 'देवस्यैषः–'इत्यादेः गौडपादकारिकात्वेन श्रीमच्छङ्करभगवत्पादैः माण्डूक्यभाष्ये व्याख्यातत्वेन श्रुतित्वासिद्धेः ।

यत्तु—

'असाधारणधर्मो हि लक्षणं परिकीर्तितम् ।

तच्च निर्धर्मकब्रह्मवादिनां युज्यते कथम् ?'–

इति मध्वचान्द्रिकोक्तम्,

तन्न,

'स्वरूपं वा तटस्थं वा लक्षणं भेदकं मतम् ।

सजातीयाद्विजातीयात्त्वाऽद्वैतिमते कथम्–'

इति एतदुत्तरभवत्कृतश्लोके भवद्भिरेव स्वरूपस्य लक्षणत्वकथनेन असाधारणधर्मस्य लक्षणत्वमिति नियमस्य भवद्भिरेव निर्दलितत्वात् ।

यत्तु 'स्वरूपं वा तटस्थं वा–'इति श्लोके सजातीयविजातीययोरद्वैतिमते अभावात् लक्षणस्य व्यावर्तकत्वं न सम्भवतीत्युक्तं, न स्वरूपस्याऽपि लक्षणत्वमङ्गीकृत्येति,

तत्र, कल्पितस्य व्यावहारिकस्य सजातीयस्य विजातीयस्य च सत्त्वेन तद्व्यावर्तकत्वेन लक्षणत्वोपपत्तेः । तस्मादनवद्यमद्वैतिमतम् ।

केचित्तु 'यतो वा–'इत्यादिश्रुतौ प्रतिवाक्यं 'ब्रह्म'इत्यनुक्तेः, अनेकलक्षणवैयर्थ्याच्च जन्मादिहेतुत्वसमुदायः एकं लक्षणम् । अत एव जन्मादिसूत्रे 'जन्मादि'इत्येकवचनमित्याहुः, तच्चिन्त्यम् ।

जन्मकारणत्व–स्थितिकारणत्व–लयकारणत्वानां प्रत्येकमनतिप्रसक्तत्वेन लक्षणत्वसम्भवे समुदायस्यैव लक्षणत्वकथनमयुक्तम्, 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत'इत्यादाविव यच्छब्दभेदेन 'यतो वा–'इत्यत्र वाक्यभेदप्रतीतेः जन्मकारणत्वादीनां प्रत्येकं लक्षणत्वस्य न्याय्यत्वात् । 'यत्र नाऽन्यत् पश्यति नाऽन्यच्छृणोति नाऽन्यद्विजानाति स भूमा अथ यत्राऽन्यत् पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम्'इत्यादौ तु यच्छब्दभेदाभावात् भूमाल्पपदयोरावृत्त्यभावाच्च तच्छब्दपर्यन्तोक्तस्य तच्छब्देनाऽनुवादं कृत्वा भूमत्वाल्पत्वविधानात् भूमाल्पयोः तच्छब्दपर्यन्तपदसमुदायलब्धार्थसमुदायस्य लक्षणत्वमिति विशेष इति ।

एतेन 'अथ यत्राऽन्यत् पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम्'इत्यत्र ज्ञानविषयगुणवत्त्वस्य अल्पलक्षणत्वोक्त्या 'अथ इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्–'इत्यादिना दहरविद्यायां दहराकाशस्य ज्ञानविषयगुणवत्त्वाभिधानात् अल्पत्वापत्तिरिति परास्तम्, 'अथ यत्राऽन्यत्–'इति वाक्ये सर्वान्ते'तदल्पम्'इति तत्पदेन दर्शनविषय–श्रवणविषय–विज्ञानविषय–गुणसमुदायवदनूद्य अल्पत्वविधानेन दर्शनादिविषयाविषयगुण-

बत्वस्यैवाऽल्पलक्षणत्वासिद्ध्या चक्षुर्जन्यसाक्षात्काररूपदर्शनाविषयगुणस्य दहराकाशे असम्भवेन तद्घटितात्पलक्षणस्य दहराकाशे अप्रसक्त्या दहराकाशस्याऽल्पत्वासिद्धेः ।

माध्वास्तु—

विचारविधिगतं ब्रह्मपदं जीवपरं, ब्रह्मपदस्य 'ब्रह्म जातिजीवकमलासनशब्दराशिषु—'इति धातुनिष्पन्नत्वेन जीवे रूढत्वात् । ब्रह्मणि तु योगो वक्तव्यः, स च रूढेर्दुर्बलः—इति पूर्वः पक्षः ।

सत्यं रूढिर्बलीयसी, सा बाधादिह त्यज्यते, 'यतो वा इमानि भूतानि—'इति जगज्जन्मादिकारणत्वं 'तद्विजिज्ञासस्व तद्ब्रह्म'इति विचार्यत्वेन कथितब्रह्मणो लक्षणमुक्तं, तच्च विष्ण्वेकनिष्ठं, न तु जीवे सम्भवति, अतो गुणपरिपूर्णो विष्णुरेव ब्रह्मशब्देन योगवृत्त्या विचारविधिवाक्ये गृह्यते—इति सिद्धान्त इत्याहुः ।

तन्न, तन्मते जगत्कारणत्वस्य ब्रह्मात्यन्ताभिन्नतया ब्रह्मलक्षणत्वासम्भवात् । अन्यथा ब्रह्मैव ब्रह्मणो लक्षणं स्यात् । न ह्यद्वैतिनामानन्दरूपस्य ब्रह्मणः आनन्दत्व—ब्रह्मत्वाभ्यामिव कल्पितभेदः माध्वैरङ्गीक्रियते, येन कारणत्वस्य ब्रह्मलक्षणत्वं भवेत् । न च कारणत्वस्य ब्रह्मात्यन्ताभेदेऽपि विशेषबलाल्लक्षणत्वोपपत्तिरिति वाच्यम् । भवन्मते विशेषरूपधर्मस्याऽपि ब्रह्मभिन्नत्वे 'एवं धर्मान् पृथक् पश्यन्—'इत्यादिश्रुतिविरोधापत्त्या विशेषस्याऽपि ब्रह्मात्यन्ताभिन्नत्वावश्यकतया कारणत्वस्य ब्रह्मलक्षणत्वोपपत्तिरित्यस्य कारणत्वबलात् कारणत्वं ब्रह्मलक्षणं, ब्रह्मबलात् ब्रह्म स्वलक्षणमित्येतत्समशीलत्वात् । किञ्च माध्वमते जगत्कर्तृत्वस्य ब्रह्मात्यन्ताभिन्नतया नित्यत्वात् 'तदैक्षत', 'तत्तेजोऽसृजत'इतिश्रुत्युक्तमागन्तुकं जगत्कर्तृत्वं कथं सङ्गच्छते ?

कारणत्वस्य शक्त्यात्मना नित्यत्वेऽपि व्यक्त्यात्मना आगन्तुकत्वमुपपद्यत इत्यप्यसत्, व्यक्त्यात्मकस्याऽपि कारणत्वस्य ब्रह्मात्यन्ताभिन्नतयोक्तदोषतादवस्थ्यात्। तस्य ब्रह्मभिन्नत्वाङ्गीकारे 'एवं धर्मान्—'इतिश्रुतिविरोधापत्तिस्तदवस्थैव। किञ्च जिज्ञासाधिकरणे माध्वैः विचाराविधिगतेन एकेन ब्रह्मपदेन बहूनामुपक्रमाद्यवगतजीवब्रह्मैक्यपराणां वेदान्तवाक्यानामन्यथाकरणमुक्तम्, जन्माद्यधिकरणे 'यतो वा इमानि भूतानि जायन्ते'इति जगत्कारणत्वलक्षणप्रतिपादनपरबहुपदानुसारेण जीवे रूढस्य एकस्य ब्रह्मपदस्य मुख्यार्थात् प्रच्यावनमुक्तमिति पूर्वोत्तराधिकरणविरोधः स्पष्टः।

श्रीकण्ठभाष्ये 'यत्र सर्वज्ञत्वादिविशिष्टं भवाद्यष्टाभिधानाधिकरणं शिवतत्त्वं, तदेव जगत्कारणं ब्रह्म, 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च नाऽन्यः कश्चिन्मत्तो व्यतिरिक्तः—'इत्यथर्वशिरोपनिषद्वाक्येन कृत्स्नजगत्कारणत्वव्यापिकायाः कृत्स्नजगदुत्पत्तेः पूर्वसत्त्वस्य रुद्रे प्रतिपादनात्, 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः—'इति रुद्रस्य अग्रकालसत्त्वनिषेधकमहोपनिषद्वाक्यं प्रसिद्धिद्योतक—'ह वै—' शब्दघटितत्वेन अनुवादः, अतः स्वार्थे तात्पर्याभावात् न तेन रुद्रजगत्कारणत्वप्रतिषेधः सिद्ध्यतीत्युक्तम्,

तन्न, 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः—'इत्यत्र 'एको ह वै नारायण आसीत्'इत्येकं वाक्यं, 'न ब्रह्मा आसीत्'इत्यपरं, 'नेशान आसीत्'इत्यन्यद्वाक्यमिति वाक्यत्रयमङ्गीकर्तव्यम्, 'न ब्रह्मा', 'नेशानः'इत्यनयोः नञ्घटितवाक्ययोः नञघटितेन 'एको ह वै नारायण आसीत्'इति वाक्येन अन्वयासम्भवेन त्रयाणामेकवाक्यत्वासम्भवात्। आद्यवाक्येन नारा-

पणः अग्रकालसत्त्वाश्रयत्ववानिति बोधो जायते, अनुषक्त-'आसीत्–'पदाभ्यां द्वितीय–तृतीय–वाक्याभ्यां ब्रह्मा अग्रकालसत्ताश्रयत्वाभाववान्, शिवोऽग्रकालसत्ताश्रयत्वाभाववानिति बोधो जायते, अतः 'चैत्रः पचति, न मैत्रः'इतिवत् वाक्यभेदोऽङ्गीकर्तव्यः। 'चैत्रस्तण्डुलं पचति, न तेमनम्'इत्यत्र तु द्वितीयान्तपदसमभिव्याहृतनञ्पदघटिते तेमनकर्मत्वाभावस्य तण्डुलकर्मताविशिष्टपाके अन्वयसम्भवेऽपि 'चैत्रः पचति, न मैत्रः'इत्यत्र प्रथमान्तकर्तृवाचकपदसमभिव्याहृतनञ्घटितवाक्ये मैत्रे पाकक्रियाश्रयत्वाभावप्रतीत्यनुरोधेन मैत्रे क्रियाश्रयत्वाभावान्वयस्य वाच्यतया तस्य मैत्रस्य 'चैत्रः', 'पचति'इति पदाभ्यां कथमप्यन्वयासम्भवात् वाक्यभेदः स्पष्टः। न च 'चैत्रकर्तृकपाकक्रिया कर्तृतासम्बन्धेन मैत्राभाववती,' 'चैत्रवृत्तिपाकानुकूला कृतिः आधेयतासम्बन्धेन मैत्राभाववती'इति वा एक एव तत्राऽन्वयबोधः, न बोधद्वयम्, येन तत्र वाक्यभेदः स्यादिति वाच्यम्। यदा चैत्रस्तण्डुलं पचति मैत्रश्च तेमनं, तदा 'चैत्रः पचति,न मैत्रः'-इति प्रयोगस्य प्रामाण्यापत्तेः, चैत्रकर्तृकपाकक्रियायां चैत्रवृत्तिकृतौ वा कर्तृत्वसम्बन्धेन मैत्राभावस्य आधेयतासम्बन्धेन तदभावस्य च सत्त्वात्। यदा चैत्रो गोष्ठे तिष्ठति, मैत्रो गृहे, तदा 'चैत्रस्तिष्ठति, न मैत्रः'इत्यस्याऽकर्मकधातुघटितस्य प्रयोगापत्तेश्च, चैत्रकर्तृकस्थितौ मैत्रकर्तृकत्वाभावसत्त्वात्। तस्मान्नैयायिकवत् वैय्याकरणमीमांसकाभ्यामपि 'चैत्रः पचति, न मैत्रः'-इत्यत्र वाक्यभेदः स्वीकर्तव्यः, स्वीकृतश्च। प्रकृते 'एको ह वै'-इत्यादौ तत्तुल्यत्वाद्वाक्यभेद एवेति।

अत्र आद्यवाक्यस्य 'ह वै'शब्दघटितत्वेनाऽनुवादतया विधित्वाभावेऽपि द्वितीयतृतीयवाक्ययोः 'ह वै'शब्दाघटितत्वेन

विधायकत्वमावश्यकम्, न हि पूर्ववाक्ये नञघटिते यद्यत्पद मस्ति, तत् सर्वं तदुत्तरे नञ्घटितवाक्ये अनुषज्यते, नारायणपदस्याऽप्यनुषङ्गापत्तेः, नञ्घटितवाक्यस्य यत्पदं विना अन्वयाबोधकत्वं तत्पदमनुषञ्जनीयं, तादृशं तु 'आसीत्'इति पदं, न तु 'ह वै'इत्यपि, तथा च 'नेशान आसीत्'इति तृतीयवाक्येन रुद्रस्याऽग्रकालसत्त्वप्रतिषेधबोधनेन व्यापकं निवर्तमानं व्याप्यमपि निवर्तयतीति न्यायेन जगत्कारणत्वव्यापकाग्रकालसत्त्वस्य रुद्रे प्रतिषेधे तद्व्याप्यजगत्कारणत्व प्रतिषिद्धमेव भवेत्। न च 'नेशानः'इति वाक्ये तृतीयशिवस्य अग्रकालसत्त्वनिषेधः, न तुरीयशिवस्येति शङ्क्यम्, 'एक एव रुद्रो न द्वितीयाय तस्थे'इति श्रुतौ विशेषणसम्बन्ध्येवकारेण 'शङ्खः पाण्डर एव'इतिवत् रुद्र एकत्वायोगव्यवच्छेदपरेण रुद्रद्वित्वप्रतिषेधात्, अत एव 'रुद्रो वा एष यदग्निः, तस्यैते तनुवौ घोराऽन्या शिवाऽन्या'इति श्रुतौ, 'या ते रुद्र शिवा तनूरघोरा पापकाशिनी, तया नस्तनुवा शन्तमया गिरिशन्ताऽभिचाकशीहि, यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे, शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत्'इति श्रुतौ च एकस्यैव रुद्रचेतनस्य द्वितीयत्वनिर्वाहकतया घोराघोरतनुभेद एव कथितः। अत एव श्रीविद्यारण्यस्वामिभिः ऋग्वेदभाष्यभूमिकायां 'एक एव—'इतिश्रुतिस्थ-'एव—'कारपर्यालोचनया 'सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्'इति श्रुतिः एकस्यैव रुद्रस्य विग्रहभेदाभिप्रायेति वर्णितम्। 'अहमेकः प्रथममासम्'इति श्रुतौ उत्तमपुरुषस्य विधिशक्तिकुण्ठकस्य सत्त्वात् तस्याः अर्थवादतया न तया रुद्रस्याऽग्रकालसत्त्वं सिद्ध्यति। पूर्वतन्त्रे 'विधिमन्त्रयोरेकार्थ्यम्—'इत्यधिकरणे उत्तमपुरुषस्य

विधिशक्तिकुण्ठकत्वं वर्णितम्। न च 'ध्यायीतेशानं प्रध्यायितव्यं इदं सर्वं ब्रह्मविष्णुरुद्रेन्द्राः ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः न कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये सर्वमन्यत् परित्यज्य शिव एको ध्येयः शिवङ्करः' इत्यथर्वशिखोपनिषद्वाक्यैः शिवस्य जगत्कारणत्वप्रतीत्या 'नेशान आसीत्' इति महोपनिषद्वाक्येन एकान्ततः कारणत्वप्रतिषेधो न युक्त इति शङ्क्यम्, यथा उपांशुयाजाधिकरणे 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति वाक्ये जामितादोषपरिहारकार्थविशेषबोधकोपक्रमोपसंहारानुरोधेन कृत्स्नस्य एकवाक्यत्वप्रतीत्या अन्तरावाक्ये यागविधिः, विष्ण्वादिवाक्ये यागस्य वा अन्तरावाक्यविहितयागानुवादेन देवताया वा विधाने वाक्यभेदापत्त्या विष्ण्वादिवाक्यानां 'जामि वा—' इत्यादेश्च अर्थवादत्वमेवेति स्थापितं 'पौर्णमासीवदुपांशुयाजः स्यात्' इत्यादिसूत्रेण, तद्वत् प्रकृते ध्येयतत्त्वैकविषयोपक्रमोपसंहारानुरोधेन 'ध्यायीतेशानम्' इत्यादेः 'शिव एको ध्येयः शिवङ्करः—' इत्यन्तस्य एकवाक्यत्वावगमेन 'ध्यायीतेशानं,' 'कारणं तु ध्येयः', 'शिव एको ध्येयः' इत्येतेषां मध्ये यस्यकस्यचिद्वाक्यस्य ध्यानविधायकत्वं वक्तव्यम्, अन्यस्य च 'इदं सर्वं ब्रह्मविष्णुरुद्रेन्द्राः—' इत्यादेः 'सर्वैश्वर्यसम्पन्नः—' इत्यादेश्च कृत्स्नस्याऽर्थवादत्वं वक्तव्यम्। अन्यथा 'ध्यायीतेशानं' इत्यत्र ध्यानविधिः, 'कारणं तु ध्येयः' इत्यत्र ध्येयानुवादेन कारणत्वविधिः, 'सर्वैश्वर्यसम्पन्नः—' इत्यादौ ध्येयानुवादेन सर्वैश्वर्यादिगुणविधिः,

इत्येवं बहुविधस्वीकारे वाक्यभेदापत्तेरुपांशुयाजाधिकरणविरोधापत्तिः । किं च प्राप्तध्यानानुवादेन सर्वैश्वर्यादिगुणानां बहूनां ध्येयद्वारा विधाने प्राप्तकर्मानुवादेन अनेकगुणविधानप्रयुक्तवाक्यभेदापत्तिः, अनेकगुणविधाने वाक्यभेदश्च—

'प्राप्ते कर्मणि नाऽनेको विधातुं शक्यते गुणः ।

अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः–'

इति पूर्वतन्त्रग्रन्थे सिद्धः । तथा च 'ब्रह्मविष्णुरुद्रेन्द्राः सम्प्रसूयन्ते'इत्यादेः कारणत्वादिप्रतिपादकांशस्याऽर्थवादतया तेन रुद्रस्य जगत्कारणत्वासिद्धेः, विष्णोश्च रुद्रजन्यत्वस्याऽप्यसिद्धेः । न च 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्, ध्यात्वा मुनिर्गच्छति भूतयोनिम्'इति कैवल्योपनिषद्वाक्ये 'भूतयोनि'पदेन रुद्रस्य कारणत्वं प्रतीयत इति शङ्क्यम्, 'योनिष्ट इन्द्रसदने अकारि', 'भूतयोनिं परिपश्यन्ति धीराः', 'कर्तारमीशं पुरुषं ब्रह्मयोनिम,' 'रमणीयचरणा रमणीयां योनिमापद्यन्ते, कपूयचरणाः कपूयां योनिमापद्यन्ते—'इत्यादिश्रुतिषु स्थान—कारण—भगादिषु योनिशब्दस्य प्रयोगदर्शनेन कारणैकार्थत्वनियमाभावात् तेन 'योनि'पदेन कैवल्योपनिषत्स्थेन रुद्रस्य जगत्कारणत्वनिर्धारणासिद्धेः । 'भूतयोनिं परिपश्यन्ति'इत्यत्र तु 'यथोर्णनाभिः सृजते गृह्णते च'इति दृष्टान्तसमभिव्याहारात् 'योनि'शब्दस्य उपादानकारणपरत्वमाश्रितं 'योनिश्च हि गीयते'इति सूत्रेण । न ह्यत्र तथा 'योनि'शब्दस्य कारणपरत्वे किञ्चिन्नियामकमस्ति । न च 'यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः, यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै वै नमो नमः–' इत्यादिना अथर्वशिरसि रुद्रस्य सार्वात्म्यप्रतिपादनात्

सार्वात्म्यप्रयोजकं सर्वकारणत्वं सिद्ध्यतीति वाच्यम्। 'देवा ऊर्ध्वबाहवः रुद्रं स्तुन्वन्ति'इत्युपक्रमानुसारेण स्तुतित्वस्य 'यो वै रुद्रः स भगवान्–'इत्यादावगमात्, 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्, ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः,' 'नमस्ते रुद्र मन्यवे–'इत्यादाविव स्तुतित्वप्रयोजक-'नमः'शब्दघटितत्वेन 'यो वै रुद्रः–'इत्यादौ स्तुतित्वावगमाच्च। स्तुतिवाक्यस्य स्वार्थे न तात्पर्यमित्येतत् 'स्तुतयेऽनुमतिर्वा', 'स्तुतिमात्रमुपादानादिति चेन्नाऽपूर्वत्वात्–'इतिव्याससूत्रसिद्धम्। न च तर्हि 'नमः'शब्दस्य स्तुतित्वज्ञापकतया विधिकुण्ठकत्वे 'रुद्राय नमः कर्तव्यम्'इति वाक्येन नमस्कारस्य विधानानुपपत्तिरिति वाच्यम्। यथा एवकारस्य स्वव्यतिरिक्तार्थे स्वसमभिव्याहृतोपस्थाप्ये विधिं प्रति कुण्ठकत्वेऽपि एवकारार्थस्य 'सत्यमेव वदेत्–,' 'अत्र ह्येवाऽऽवपन्ति,' 'अत एवोद्वपन्ति–'इत्यादौ विधौ 'एव'कारस्याऽकुण्ठकत्ववत् 'नमः'शब्दस्याऽपि स्वसमभिव्याहृतपदार्थे अज्ञातज्ञापनादिरूपविधिकुण्ठकत्वेऽपि स्वार्थे विधिं प्रत्यकुण्ठकत्वात्। किं च तैत्तिरीयशाखायां 'प्रजापतौ हर आसीत्'इति वाक्यं दृश्यते, छान्दोग्ये प्रपदमन्त्रे 'विरूपाक्षाय ब्रह्मणः पुत्राय नमः'इति वाक्यं दृश्यते, ताभ्यां च रुद्रस्योत्पत्तिः प्रतीयते। बृहदारण्यकोपनिषदि 'तच्छ्रेयो रूपमत्यसृजत तत्क्षत्रं यान्यत्र देवक्षत्राणि इन्द्रो वरुणः सोमः पर्जन्यो रुद्रो मृत्युरीशानः'इति वाक्यं दृश्यते, तादृशवाक्येन च रुद्रस्य क्षत्रियत्वमवगम्यते, तादृशवाक्यघटकरुद्रपदस्य बृहदारण्यकभाष्ये श्रीमच्छङ्करभगवत्पादैः 'रुद्रः–पशूनामधिपतिः'इति व्याख्यानं कृतं, तदेतत् सर्वं श्रीकण्ठभाष्यकृता अन्यथयितव्यम्। अन्यथा स्वमतसिद्ध्यनापत्तेः।

एतेन शिवतत्त्वविवेके 'महोपनिषत्सुबालोपनिषदादिश्रुतिः सृष्टिसंहृत्यक्रमप्रतिपादनपरा, स्रष्टृस्वरूपस्य श्वेताश्वतराद्युपनिषदन्तरसिद्धत्वात्' इत्युक्तमपास्तम्, श्वेताश्वतरादौ रुद्रस्य जगत्कारणत्वव्यापकाग्रकालसत्त्वप्रतिषेधादर्शनेन तत्प्रतिषेधक—'नेशान आसीत्' इति महोपनिषद्वाक्यस्य अज्ञातार्थज्ञापकत्वेन शिवो नाऽग्रकालवृत्तीत्यर्थे प्रमाणत्वावश्यकतया सृष्टिसंहृत्यक्रममात्रप्रतिपादनपरत्वमेव महोपनिषदादेरित्युक्तिरसङ्गतेत्यलम् ।

वल्लभभाष्ये 'सत्यं ज्ञानमनन्तं ब्रह्म अस्थूलमनणु—' इत्यादिना ब्रह्मणि सर्वधर्मप्रतिषेधात् कारणत्वस्याऽपि प्रतिषेधे कथं तद्ब्रह्मलक्षणं भवति ? अतो लक्षणशून्यत्वात् ब्रह्म न जिज्ञास्यमिति पूर्वपक्षं प्रापय्य 'अस्थूलम्—' इत्यादिना प्रापञ्चिकधर्मस्य निराकरणेऽपि जगत्कारणत्वलक्षणब्रह्मासाधारणधर्मस्याऽनिराकरणात् तस्य लक्षणत्वं तत एव ब्रह्मणो जिज्ञास्यत्वं च सम्भवतीति सिद्धान्तः प्रदर्शितः,

स चाऽयुक्तः, तन्मते ब्रह्मणः साक्षादेव जगदाकारेण परिणामित्वाङ्गीकारेण जगद्गतस्य सर्वस्याऽपि धर्मस्य ब्रह्मधर्मतया धर्मे प्रापञ्चिकत्वाप्रापञ्चिकत्वरूपद्वैविध्यस्यैवाऽसम्भवात् ।

इति मध्वचन्द्रिकाखण्डने जन्माद्यधिकरणं समाप्तम् ।

सू० शास्त्रयोनित्वात् १ । १ । ३

शास्त्रस्य योनिः कारणमिति व्युत्पत्त्या ऋग्वेदादिकारणत्वं ब्रह्मण इहोच्यते पूर्वसूत्रोक्तजगत्कारणत्वसिद्धसार्वज्ञस्फोरणार्थमित्यद्वैतिनः प्रवदन्ति ।

यत्तु लक्षणानन्तरमवश्यापेक्षितप्रमाणपरत्वसम्भवे अस्य

सूत्रस्याऽन्यपरत्वायोग इति,

तन्न, अपेक्षितप्रमाणपरत्वेनाऽपि अस्य सूत्रस्य द्वितीयवर्णकमाश्रित्याऽद्वैतभाष्यकृद्भिरेव योजितत्वात् । वस्तुतस्तु 'योनि'शब्दस्य 'भूतयोनिं परिपश्यन्ति धीराः, यथोर्णनाभिः—'इत्यादौ 'ऊर्णनाभिः—'इत्यादिसमभिव्याहारानुरोधेन कारणपरत्वाश्रयणवत् 'जन्माद्यस्य यतः'इति सूत्रसमभिव्याहारानुसारेण शास्त्रयोनिसूत्रस्थ'योनि'शब्दस्य कारणपरत्वमेवाऽऽश्रयणीयमिति 'शास्त्रयोनि'पदस्य शास्त्रकारणार्थत्वमाश्रितम्, तदेव च युक्तम्, 'योनि'शब्दस्य कारणे प्रयोगवत् प्रमाणे क्वाऽप्यप्रयोगात् प्रमाणपरत्वे लक्षणा वक्तव्या, 'शास्त्रप्रमाणकत्वात्'इति सूत्रमकृत्वा 'शास्त्रयोनित्वात्'इति सूत्रकरणेनैव 'शास्त्रयोनि'शब्दशक्यार्थवेदकारणत्वमपि ब्रह्मणो वक्तव्यमिति सूत्रकाराशय इत्यवगम्यते, अत एव श्रीमच्छङ्करभगवत्पादैः 'योनि'शब्दस्य मुख्यार्थमाश्रित्य प्रथमं कारत्वमाश्रितम्, पश्चात् प्रमाणप्रदर्शनस्याऽपेक्षिततया 'योनि'शब्दस्य लक्षणया प्रमाणपरत्वमप्याश्रितम् ।

यत्तु भवदभिमतभ्रमाधिष्ठानत्वरूपकारणत्वेन ब्रह्मणः सार्वज्ञासिद्धिरिति,

तन्न,अद्वैतसिद्धान्ते उपहितब्रह्मणः कृत्स्नजगदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृत्यात्मकमायावृत्त्याश्रयत्वरूपजगत्कारणत्वस्य विवरणग्रन्थादौ स्वीकृतत्वेन तद्घटकसार्वज्ञस्य तेनाऽर्थसिद्धिसम्भवात् । न च अद्वैतमते निर्विशेषस्य प्रथमसूत्रे जिज्ञास्यत्वोक्त्या तस्यैव जन्मादिसूत्रे लक्षणस्य वक्तव्यतया तल्लक्षणस्य कथं कारणत्वरूपत्वमिति शङ्क्यम्, 'ब्रह्म च वक्ष्यमाणलक्षणं 'जन्माद्यस्य यतः'इति'इति जिज्ञासासूत्र-

स्य 'ब्रह्म' शब्दव्याख्यानरूपश्रीमदद्वैतभाष्यग्रन्थेन उपहितस्यैव ब्रह्मणो जिज्ञास्यत्वोक्तेः । निर्विशेषस्य जिज्ञास्यत्वं तु आर्थिकम्, 'सर्वशक्तेः' इति जन्मादिसूत्रश्रीमदद्वैतभाष्यग्रन्थेन सर्वज्ञत्वसर्वशक्तित्वाद्युपहितस्यैव कारणत्वमित्यवगम्यते, तस्मान्निर्विशेषस्यैव जिज्ञास्यत्वमद्वैतिमत इत्येतत् अद्वैतभाष्यग्रन्थापरिशीलनप्रयुक्तम् ।

यत्तु जन्मादिसूत्रे अर्थसिद्धसार्वज्ञस्यैव स्फोरणार्थं शास्त्रयोनित्वसूत्रमित्ययुक्तम्, सर्वज्ञत्ववत् सर्वशक्तित्वस्याऽपि सर्वकारणत्वेनाऽऽक्षिप्ततया तत्स्फोरणार्थं सूत्रान्तरमपि स्यादिति,

तन्न, सर्वज्ञत्वदृढीकारे तत्समनियतसर्वशक्तित्वस्याऽपि दृढीकृतप्रायत्वात् तदर्थं सूत्रान्तरानपेक्षणात् । अत एवाऽद्वैतभाष्ये शास्त्रयोनित्वसूत्रे 'सर्वशक्तित्वं च' इति निगमितम् ।

यत्तु साङ्ख्याभिमताचेतनकारणत्वस्य चेतनतामात्रेण निषेधसम्भवे साङ्ख्यानङ्गीकृतशास्त्रयोनित्वेन सार्वज्ञसाधनमयुक्तमिति,

तन्न, 'जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं, तदेव द्रढयन्नाह—'शास्त्रयोनित्वात्' इत्यवतरणाद्वैतभाष्येण शास्त्रयोनित्वसूत्रस्य सार्वज्ञदृढीकरणार्थं प्रवृत्तत्वावगमेन प्रधानकारणनिरासार्थत्वमात्रकल्पनस्य अस्मद्भाष्यरीतिविरुद्धत्वात् ।

यत्तु जगन्निर्माणेनाऽस्फुटीकृतसार्वज्ञस्य तदेकदेशशास्त्रनिर्माणेन स्फुटीकरणोक्त्ययोग इति,

तन्न, जगन्निर्माणेन सार्वज्ञं न स्फुटीकृतं, किं तु शास्त्रनिर्माणेनेत्यस्मद्भाष्यकारादिभिरनुक्तत्वात्, जगन्निर्माणसिद्धसार्वज्ञदार्ढ्यार्थत्वस्यैवोक्तत्वात्, शास्त्रस्य जगदेकदेशत्वेऽपि कृत्स्नस्य जगतो ब्रह्मणश्च सपरिकरस्वरूपस्य शास्त्रेणैवाऽव-

गमनीयतया तादृशशास्त्रनिर्मातृत्वस्य जगन्निर्माणेनाऽस्फुटीकृतसार्वज्ञस्फुटीकरणप्रयोजकत्वोपपत्तेश्च ।

अत्र भामती-विवरणयोः जगत्कारणत्वेन सिद्धे सार्वज्ञे शास्त्रयोनित्वं हेत्वन्तरमुच्यते, 'वेदः स्वविषयादधिकविषयकज्ञानवत्प्रणीतः, वाक्यप्रमाणत्वात्, पाणिन्यादिशास्त्रवत्-'इत्युक्तम् ।

यत्तु एकार्थमात्रज्ञेन प्रयुक्तस्य शब्दस्याऽबाधितानेकार्थबोधकत्वदर्शनेनोक्तानुमानासङ्गतिरिति,

तन्न, एकार्थमात्रज्ञप्रयुक्तः शब्दः किं पदरूपः, किं वा वाक्यरूपः ? नाऽऽद्यः, तत्र प्रमाणवाक्यत्वहेत्वसिद्धेः । नाऽन्त्यः, अनेकार्थकानेकपदघटितवाक्यप्रयोक्तुः तद्वाक्यविषययावदर्थविषयकप्रतीतेरविप्रतिपन्नत्वात् ।

एतेन 'नन्वन्योऽर्थो न तात्पर्यविषयः-'इत्यादिः 'तज्ज्ञं ब्रह्म न स्यात्'इत्यन्तो मध्वचन्द्रिकाग्रन्थः परास्तः, अनुक्तोपालम्भनत्वात् ।

यत्तु न तावदर्थमुपलभ्य रचयितृत्वं प्रणेतृत्वं, वेदरूपशास्त्रस्य पौरुषेयत्वापातात् । नाऽप्यध्यापकवदुच्चारयितृत्वमात्रं, तेन सार्वज्ञासिद्धेः । स्ववृत्तित्वातिरिक्तोपदेश्यगोचरभ्रमस्य भ्रान्तिसिद्धशरीरादेश्चाऽभावेन ब्रह्मणोच्चारणासम्भवात् तस्य असार्वज्ञं विना अयोगात्, शास्त्रयोनित्वमसार्वज्ञ एव भवन्मते स्याद्धेतुरिति,

तन्न, तत्तदर्थोपलब्धिपूर्वकं पूर्वपूर्वकल्पीयवर्णपदवाक्यक्रमस्वरादिसजातीयवर्णपदवाक्यक्रमस्वरादिवत्तया शास्त्रं प्रति रचयितृत्वं शास्त्रप्रणेतृत्वमिति भामतीकल्पतर्वोः देवताधिकरणे निर्णीतत्वात्, मायाकार्यसर्ववस्तुविषयकमायावृ-

त्तिरूपज्ञानवत्त्वात्मकसर्वज्ञत्वस्य तत्प्रयुक्तशब्दोच्चारणस्य च मायाख्योपाधिमात्रेण निर्वाहे तदर्थं शरीराद्यनपेक्षणात्, अपेक्षणेऽपि साक्षान्मायैव भगवच्छरीराकारेण वर्तत इत्यस्याऽर्थस्य अन्तस्तद्धर्माधिकरणभाष्ये श्रीमच्छङ्करभगवत्पादैरुक्तत्वात्, मायाकार्यसर्वविषयकमायावृत्तिरूपज्ञानवत्त्वात्मकसार्वज्ञवति ब्रह्मणि तदभावरूपासार्वज्ञापादनासम्भवात्, तूलाविद्यापरिणामरूपवृत्तेः सिद्धान्ते भ्रमत्वाङ्गीकारवत् मायावृत्तेस्तत्त्वानङ्गीकारात्। बाधितार्थविषयकत्वरूपभ्रमत्वं तु सर्ववस्त्वपरोक्षावभासरूपमायावृत्तेरपि इष्यत एव, न ह्येतावता जीववद्ब्रह्मणोऽपि भ्रान्तत्वं, तूलाविद्यापरिणामरूपभ्रमाख्यवृत्तिमत्त्वस्यैव भ्रान्तत्वप्रयोजकत्वात्।

विवरणे दीपगता प्रकाशनशक्तिः यथा तदुपादाने वन्हौ, तथा वेदगता सर्वप्रकाशनशक्तिः तदुपादाने ब्रह्मणि, कार्योपादानयोरेकशक्तित्वादिति ग्रन्थे हेतुभागे कार्यपदस्य प्रकाशत्वव्याप्यधर्मावच्छिन्नकार्यमर्थः, न तूपादेयभूतकार्यसामान्यम्। एवं तद्भागे उपादानपदस्य प्रकाशत्वव्याप्यधर्मावच्छिन्नोपादानमर्थः, न तूपादानसामान्यम्। दीपवह्न्योः प्रकाशद्रव्ययोरेव कार्योपादानयोरेकशक्तित्वविषये निदर्शनतया गृहीतत्वात्। ब्रह्मणश्च प्रकाशद्रव्यत्वं 'तस्य भासा सर्वमिदं विभाति' इतिश्रुतिसिद्धम्।

एतेन 'कारणे अदृष्टस्याऽपि शक्तिविशेषस्य—' इत्यादिः 'ब्रह्माऽपि तथा स्यात्' इत्यन्तो मध्वचन्द्रिकाग्रन्थः परास्तः।

यत्तु जन्मादिकारणत्वेनैव उपलक्षणेन उपलक्ष्यस्वरूपसिद्धौ न किञ्चिन्निर्विशेषत्वप्रतिकूलसार्वज्ञ्यस्फोरणेनेति,

तन्न, निर्विशेषस्वरूपोपलक्षकसर्वजगत्कारणत्वोपपाद्यसार्वज्ञ्यस्याऽपि कारणत्ववत् निर्विशेषत्वोपलक्षकतया तत्प्रतिकूल-

त्वाभावात् ।

अथ वा वेदनित्यत्वात् ब्रह्मणो विश्वयोनिता नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यत इति कल्पतरुः ।

यत्तु श्रुतीनां परस्परविरोधपरिहाराय ब्रह्मव्यतिरिक्तसर्वानित्यत्वस्य वियत्पादे वक्ष्यमाणतया तत्रैव शास्त्रयोनित्वस्य वक्तुं सङ्गतत्वेन इह तदुक्त्ययोग इति,

तन्न, अवश्यापेक्षितप्रमाणोपन्यासार्थं सूत्रे शास्त्रस्य वक्तव्यत्वे तस्मिन्नेव सूत्रे प्रमाणत्वादितिवक्तव्यस्थाने 'योनित्वात्'-इति निर्देशेन वेदनित्यत्वप्रयुक्तजगत्कारणत्वासम्भवशङ्कानिराकरणसम्भवे वेदनित्यत्वार्थं वियत्पादे पृथक् सूत्रं कृत्वा वेदानित्यत्वं विचार्यमित्यापादनस्य लाघवगौरवादितर्काप्रतिभासमूलत्वात्, श्रुतीनां परस्परविरोधपरिहारेणाऽनित्यत्वं वक्तव्यं चेत् वियत्पादे सङ्गतिः स्यात्, शास्त्रनित्यत्वेन ब्रह्मणि कृत्स्नजगत्कारणत्वलक्षणासम्भव आपाद्यमाने लक्षणकथनानन्तरमेव लक्षणासम्भवपरिहारस्य वक्तव्यतया तस्याऽत्रैव सङ्गतत्वेन वियत्पादे तत्सङ्गतिकथनस्याऽसन्तासङ्गत्वाच्च । ब्रह्मणः शास्त्रकारणत्वं च शास्त्रप्रतिपाद्यसर्वार्थपरिज्ञानपूर्वकं कल्पान्तरीयशास्त्रगतवर्णपदवाक्यक्रमस्वरार्थादिसदृशवर्णपदादिमत्त्वेन शास्त्ररचयितृत्वं, न तु भारतादिकर्तृत्ववत् अपूर्ववर्णपदवाक्यक्रमवत्त्वेन वेदरचयितृत्वम् ।

एतेन 'अध्यापक–'इत्यादिः मध्वचन्द्रिकाग्रन्थः परास्तः ।

यत्तु 'अस्य महतो भूतस्य निश्वसितमेतत् ऋग्वेदो यजुर्वेदः–'इत्यादि वाक्यं वेदकर्तृत्वेन ब्रह्मणः सर्वज्ञत्वं साधयतीत्यसत्, अस्य वाक्यस्याऽनुमानरूपत्वाभावादिति,

तन्न, सर्वज्ञत्वव्याप्यवेदकर्तृत्वप्रतिपादकत्वेनाऽस्य वाक्य

स्याऽनुमानरूपत्वे बाधकाभावादिति ।

अत्र माध्वाः—

उक्तं जन्मादिकारणत्वं न विष्णवसाधारणं, जगदनेककर्तृकं, विचित्रकार्यत्वात्, हरो जन्मादिकारणं, सर्वज्ञत्वादित्यनुमानैः पाशुपताद्यागमैश्च रुद्रादीनामपि जगत्कारणत्वावधारणात्–इति प्राप्ते–

जगत्कारणस्य धर्मादिवत् शास्त्रैकप्रमाणत्वात् शास्त्रस्य श्रुति–भारत–मूलरामायण–पाञ्चरात्र–तदनुसारिपुराणादिरूपत्वस्य–

'ऋग्यजुःसामाथर्वाश्च भारतं पाञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ।
यच्चाऽनुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्–'

इतिमध्वभाष्योदाहृतस्कान्दपुराणवचनासिद्धत्वात् तादृशस्य शास्त्रस्य विष्ण्वेकनिष्ठजगत्कारणत्वप्रतिपादकत्वात्, अनुमानस्य प्रत्यनुमानादिना दूषयितुं शक्यत्वात्, पाशुपतादीनां मोहशास्त्रत्वप्रसिद्धेश्च जगत्कारणत्वलक्षणं विष्णोरेव, न रुद्रादेः–इत्याहुः ।

तन्न, भवद्भाष्ये पदेपदे प्रमाणतयोदाहृते भागवते तृतीय–चतुर्थ–स्कन्धयोः—

'ब्रह्मादयो यत्कृतसेतुपाला
यत्कारणं विश्वमिदं हि माया ।
आज्ञाकरी यस्य पिशाचचर्या
अहो विभूम्नश्चरितं विडम्बनम्–'

इत्यादिना रुद्रस्याऽपि जगत्कारणत्वादिप्रतिपादनात् । किं च

मध्वभाष्ये—

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च—'

इत्यारभ्य वेद–पाञ्चरात्रयोरैक्याभिप्रायेण पाञ्चरात्रस्यैव प्रामाण्यमुक्तम्, इतरेषां भिन्नमतत्वं प्रदर्श्य 'मोक्षधर्मेष्वपि' इति ग्रन्थेन पाञ्चरात्रस्य वैदिकत्वं पाशुपतादीनामवैदिकत्वमुक्तमिति प्रतीयते, तन्न सङ्गच्छते, भारतकोशे मुद्रिते अमुद्रिते दाक्षिणात्ये औत्तरे वा सर्वत्र

'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै—'

इत्याकारकमेव वचन मोक्षधर्मे दृश्यते, न तु—

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च—'

इत्याकारकम् । तथा च कोशदृश्यमानवचनरीत्या पाशुपतवत् पाञ्चरात्रस्याऽपि वेदप्रस्थानात् प्रस्थानान्तरत्वमविशिष्टं भासते, तत्रैवं सति पाञ्चरात्रस्य वैदिकत्वं, पाशुपतस्याऽवैदिकत्वमित्यभिधानं साहसमात्रम् । न च मोक्षधर्मे नारायणीये—

'वेदैश्चतुर्भिः सहितं कृतं मेरौ महागिरौ—'

इति वचनेन पाञ्चरात्रस्य वेदमूलकत्वम्,

'अस्मात् प्रवक्ष्यते धर्मान् मनुः स्वायम्भुवः स्वयम्—'

इति वचनेन वेदमूलकत्वेन सम्प्रतिपन्नमानवधर्मशास्त्रं प्रति पाञ्चरात्रस्य मूलत्वोक्त्या पाञ्चरात्रस्य वैदिकत्वं,

'कथितो हरिगीतासु समासविधिकल्पितः—'

इति तदीयवचनेन भगवद्गीतामूलत्वं शङ्क्यम्, उभयविधदर्शनेन तर्हि वैदिकत्वस्य सन्दिग्धतया तन्निश्चयायोगात् ।

इति मध्वचन्द्रिकाखण्डने शास्त्रयोनित्वाधिकरणं समाप्तम् ।

सू० तत्तु समन्वयात् १।१।४।

न ब्रह्मणि वेदान्ताः प्रमाणं, सिद्धवस्तुबोधने प्रवृत्त्याद्यभावेन फलासम्भवात्, सापेक्षत्वाच्च—इति प्राप्ते—

परिपूर्णानन्दब्रह्मात्मैक्यविषयकाज्ञानस्य तन्मूलकस्य नाऽहं परिपूर्णानन्दं ब्रह्म, किं तु मनुष्योऽहं दुःख्यहमित्यादिरूपस्य सर्वसंसारदुःखनिदानभ्रमस्य वेदान्तविचारजन्यब्रह्मात्मैक्यसाक्षात्कारेण निवृत्त्या तादृशनिवृत्त्युपलक्षितात्मस्वरूपं परिपूर्णानन्दं ब्रह्मैव प्राप्तब्रह्मप्राप्तिशब्दितं फलितमिति सिद्ध्यतीति सफलत्वाद्ब्रह्मणो मानान्तरागोचरत्वेन प्रत्यक्षादिगृहीतग्राहित्वरूपसापेक्षत्वाभावाच्च वेदान्ता ब्रह्मणि प्रमाणम्। न च आद्यसूत्रेण जिज्ञासापदस्वारस्येन विचाराधीनज्ञानस्य अज्ञाननिवृत्तिरूपफलसिद्धेः इदं सूत्रं कृतकरमिति शङ्क्यम्, जिज्ञासापदेन फलस्य सूचनेऽपि जिज्ञासापदलभ्यज्ञाननिष्ठाज्ञाननिवृत्तिजनकतायां संशब्दितोपक्रमादिषड्विधतात्पर्यलिङ्गज्ञानाधीननिर्णयविषयब्रह्मात्मैक्यविषयकत्वमवच्छेदकमितिप्रतिपादनपरत्वेनाऽस्य सूत्रस्य कृतकरत्वाभावादिति सिद्धान्तः।

सूत्रार्थस्तु—तत्—जीवाभिन्नं ब्रह्म ब्रह्मज्ञाननिष्ठमोक्षजनकतायां विषयितासम्बन्धेनाऽवच्छेदकं, उपक्रमादिषड्विधतात्पर्यलिङ्गज्ञानाधीननिर्णयविषयाखण्डसच्चिदानन्दब्रह्मात्मैक्यतात्पर्यकवेदान्तबोध्यत्वरूपसमन्वयादिति प्राहुः।

एतेन 'तत्र पूर्वपक्षोऽनुपपन्नः—'इत्यादिः 'जिज्ञासाशब्देन परिहृतत्वात्'इत्यन्तो मध्वचन्द्रिकाग्रन्थः परास्तः।

यत्तु सिद्धपरवाक्यत्वं न सापेक्षत्वप्रयोजकं, लौकिककार्यपर—'घटमानय—'इत्यादिवाक्यस्याऽपि सापेक्षत्वदर्शनात्, पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वाच्चेति,

तन्न, लौकिककार्यपरवाक्यस्य प्रत्यक्षादिप्रमाणान्तरसापेक्षत्वे अनधिगतार्थगन्तृत्वलक्षणप्रामाण्यास्वीकारात्, अपौरुषेयस्याऽपि 'अग्निर्हिमस्य भेषजम्'इत्यादेः प्रत्यक्षाधिगतार्थगन्तृत्वलक्षणसापेक्षत्वदर्शनेन पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वमित्युक्त्यसङ्गतेश्च ।

यत्तु सन्दिग्धस्यैव विषयत्वात्; सामान्यज्ञानविशेषाज्ञाननिबन्धनसन्देहस्य निर्विशेषेऽसम्भवात्; पूर्वपक्षसिद्धान्तयोश्च सन्देहकोट्यन्यतरकोट्यवलम्बितत्वात्; फलस्य च एककोटिनिर्णयाधीनत्वात् निर्विशेषात्मनि विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनाख्यपञ्चरूपाभावादधिकरणासम्भवो द्रष्टव्य इति,

तन्न, 'साक्षात्करोमि'इत्यनुव्यवसायसिद्धलौकिकाविषयितायाः प्रत्यक्षत्वात्मकत्ववत् 'सन्देह्मि'इत्याद्यनुव्यवसायसिद्धाविषयिताविशेष एव संशयत्वं, न तु एकधार्मिकविरुद्धनानाधर्मप्रकारकज्ञानत्वं, तस्याऽयोग्यानेकपदार्थघटितत्वेन 'सन्देह्मि'इत्यादिप्रत्यक्षविषयत्वासम्भवात्, तस्य सामान्यतः पदपदार्थसङ्गतिज्ञानवत्पुरुषीयश्रोत्रेन्द्रियजन्यप्रत्यक्षविषयीकृत–'केवलो निर्गुणश्च–'इत्यादिशब्दाज्जायमाने कोटिद्वयानवगाहिनिर्विकल्पकज्ञानेऽपि सम्भवः, तदुत्तरं कदाचित् 'सन्देह्मि'इत्याद्यनुव्यवसायप्रत्यक्षदर्शनात्, तथा च तत्समानाकारकनिर्णयात्मकज्ञानरूपफलस्य विचारसाध्यत्वं सम्भवत्येव, 'केवलो निर्गुणश्च'इति वाक्ये श्रवणसमनन्तरजातापातज्ञानरूपसंशय–तद्वाक्यविचारजनितानापातज्ञानरूपनिर्णययोः निर्विशेषविषयकत्वनिर्विकल्पकज्ञानत्वाविशेषेऽपि यदुत्तरं 'सन्देह्मि'इत्यादिप्रत्यक्षं तज्ज्ञानमापातज्ञानं संशय इति चोच्यते, यदुत्तरं तादृशप्रत्यक्षं नोत्पद्यते, तत् ज्ञानमनापातज्ञानं निर्णय इति चोच्यते, सन्देहत्वस्योक्तरीत्या कोटिद्वयविषयकत्वरूपत्वाभावेन संशये कोटिद्वयप्रि-

षयकत्वानियमादिति गौडब्रह्मानन्दस्वामिविरचितब्रह्मसूत्र-मुक्तावलीजिज्ञासाधिकरणग्रन्थरीत्या पूर्वपक्ष-सिद्धा-न्तयोः विषय-सन्देहयोः फलस्य च निर्विशेषेऽपि सिद्ध्यु-पपत्तेः अधिकरणारम्भसम्भवात् ।

यत्तु विस्मृतमण्युपदेशस्य न प्राप्तमणिप्राप्तिः फलं, किं तु प्राप्तिज्ञानजन्यसुखम्, 'नाऽयं सर्पः'इत्युपदेशस्य न निवृत्तसर्पनिवृत्तिः फलम्, किं तु सर्पाभावज्ञानजन्यसुखमिति,

तन्न, न विस्मृतमण्युपदेशेन विलक्षणं सुखं जन्यते, तस्थाऽननुभवात्, भ्रमव्यवहितो मणिः प्राप्त इति हि अनुभूयते, न हि 'चरणाभरणमिदं, न सर्पः'इत्युपदेशेन सुखं जायते, अननु-भवपराहतत्वात् ।

यत्तु पूर्वपक्षिणा फलाभावादिना ब्रह्मणि वेदान्ततात्पर्ये आक्षिप्ते सिद्धान्तिना सूत्रे फलादिकं तात्पर्यं चाऽनुपपाद्य प्रामाण्ये तात्पर्यं हेतूकर्तुमयुक्तमिति,

तन्न, वन्हौ सन्दिहानं प्रति 'धूमोऽस्ति'इति वाक्येनेव सूत्रे 'तात्पर्यात्'इति हेतूक्त्या प्रामाण्यतात्पर्यव्यापकफलतत्तात्पर्ययोः सिद्ध्यनपायात् ।

यत्तु वेदान्तस्य लक्षणया निर्विशेषब्रह्मतात्पर्ये लक्षणायाः अमुख्यवृत्तित्वेन सूत्रे वृत्तौ मुख्यत्वसमर्पक-'सम्'इत्युपसर्गा-योग इति,

तन्न, 'तत् सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं ब्रह्म'इत्यादिना श्रीशाङ्करसमन्वयसूत्रसिद्धान्तभाष्यो-पक्रमेण वाच्ये सगुणेऽपि समन्वयोक्त्या 'सम्'इत्युपसर्गोपपत्तेः । लक्षणया निर्विशेषसमन्वयस्वीकारेऽपि उपक्रमोपसंहारादिषड्वि-धतात्पर्यलिङ्गानवगमितशक्त्यपेक्षया प्रबलत्वेन 'सम्'इत्यस्य निर्वि-

शेषपरत्वेऽप्युपपत्तेः ।

यत्तु जिज्ञासार्थमाद्यसूत्रे प्रसिद्धिरुक्ता अहमर्थे, अनहमर्थे द्वितीयसूत्रे जगद्धेतुता लक्षणतयोक्ता, तृतीये निर्विशेषे शास्त्रस्य प्रमाणतोक्ता, तुरीये तत्रैव समन्वय उक्तः, 'अन्तस्तद्धर्मोपदेशात्'इत्यादिना सविशेषं ब्रह्म विचारितमिति किं केन सङ्गतमित्युक्तम्,

तन्न, एकमेव चैतन्यं अन्तःकरणशब्दितेनाऽहमर्थेन मायया चाऽवच्छिद्यते, अन्तःकरणावच्छेदेन तदेव चैतन्यं जीव इति शब्द्यते, मायावच्छेदेन ईश्वर इति शब्द्यते, तत्तदवच्छेदविशिष्टं सत् तदेवाऽवच्छेदकानिष्कासनेन शुद्धमित्यपि शब्द्यते । तथा च एकस्मिन्नेव जिज्ञासार्थे अन्तःकरणरूपावच्छेदकेनाऽहमिति प्रसिद्धिः, मायारूपेणाऽवच्छेदकान्तरेण जगद्धेतुता, प्रमाणसमन्वयस्तु चैतन्ये मायावच्छेदेन, स्वरूपेण च, अपहतपाप्मत्वादिधर्मोपदेशस्तु मायावच्छेदेन । तथा चाऽवच्छेदकभेदेन प्रसिद्धिजगत्कारणत्वादीनां एकवस्तुनिष्ठत्वसम्भवात् वैयधिकरण्याशङ्का न प्रसज्यत इति किमत्राऽसङ्गतमस्ति ?

माध्वास्तु–

अस्तु शास्त्रैकसमधिगम्यं जगत्कारणं, तथाऽपि अतिव्यापकमिदं लक्षणम्, क्वचिच्छास्त्रतोऽपि पशुपत्यादीनां कारणत्वप्रतीतेः–इति प्राप्ते,–

सम्यग्विचारितात् उपक्रमादिषड्विधतात्पर्यलिङ्गात् समन्वयात् विष्ण्वाख्यं ब्रह्मैव जगत्कारणम्–इति सिद्धान्त इत्याहुः ।

तन्न, माध्वमतरीत्या सर्वव्याख्यानाधिकरण एवाऽस्याऽर्थस्य कथनौचित्यात्, सङ्गतिलोभेनाऽत्रोक्तौ पुनः सर्व-

व्याख्यानाधिकरणे अस्याऽर्थस्य कथनेन पौनरुक्त्यादिदोषापत्तेः ।

इति मध्वचन्द्रिकाखण्डने समन्वयाधिकरणं समाप्तम् ।

सू० ईक्षतेर्नाऽशब्दम् १ । १ । ५

अत्राऽद्वैतिनः—

'सदेव सौम्य—'इत्यादि कारणवाक्यं साङ्ख्यादिस्मृतिसिद्धाचेतनप्रधानरूपजगत्कारणानुवादि—इति प्राप्ते,

ईक्षणस्य हेतोश्चेतनमात्रान्वयिनः सत्त्वेन सच्छब्दवाच्यं जगत्कारणं, नाऽचेतनम्—इति सिद्धान्त इति प्राहुः ।

इदमधिकरणमचेतनस्य स्वातन्त्र्येण जगदाकारपरिणामित्वं नाऽस्ति, किं तु अचेतनं प्रधानं न स्वतन्त्रं, तदुपहितं ब्रह्मैव स्वतन्त्रमित्येतत्परम् । न चाऽखण्डब्रह्मणि निर्विशेषे पूर्वाधिकरणे समन्वयोक्त्या तदव्यवहितेऽस्मिन्नधिकरणे तस्यैव कारणत्वं वक्तव्यं, न तूपहितस्येति माध्वचन्द्रिकोक्तं युक्तम्, 'एवं सर्वेषां वेदान्तवाक्यानां ब्रह्मात्मैकत्वप्रतिपत्तिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानामन्तरेणाऽपि कार्यानुप्रवेशं ब्रह्मणि पर्यवसानमुक्तं, ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणमित्युक्तम्'इति ईक्षित्यधिकरणोपक्रमश्रीशाङ्करभाष्येण पूर्वाधिकरणोक्तसमन्वयस्य सार्वज्ञसर्वशक्तित्वाद्युपहितब्रह्मन्वृत्तित्वस्याऽप्यवगमेनोपाहितस्य अस्मिन्नधिकरणे परिणामित्वोक्तेः सुसङ्गतत्वात् । 'सदेव सौम्येदमग्र आसीव'इतिश्रुत्युक्तं सत्त्वमुपहितस्याऽपि सम्भवति, विवरणव्याख्याने तत्त्वदीपने 'निर्विशेषचैतन्यं पारमार्थिकसत्त्वम्, मायोपहितचैतन्यं व्यावहारिकसत्त्वम्, तूलाविद्यावच्छिन्नचैतन्यं प्रातिभासिकम्'इत्युक्तत्वात् ।

एतेन 'परिणामित्वमेतद्वाक्यबोध्यमिति सिद्धान्त्यते—'इत्यादिः 'ईक्षतेरिति हेतूक्तिश्च न स्यात्'इत्यन्तः चन्द्रिकाग्रन्थः परास्तः।

यत्तु अस्याऽधिकरणस्य समन्वयपरत्वे 'आनन्दमयोऽभ्यासात्', 'अन्तस्तद्धर्मोपदेशात्'इत्यादाविव 'सदीक्षतेः'इति सूत्रं स्यात्, प्रधानस्य सशब्दत्वनिरासपरत्वे तन्निरासके चतुर्थपादे इदमधिकरणं स्यादिति,

तन्न, प्रधानवादिभिः परिनिष्ठितत्वाद्ब्रह्मणः प्रमाणान्तरगम्यतया न तत्र श्रुतितात्पर्यरूपसमन्वयः सम्भवति, किं तु श्रुतेः साङ्ख्यानुमानसिद्धप्रधानानुवादित्वमेवेति ब्रह्मसमन्वयोपरि आक्षेपे कृते तत्परिहारमुखेनाऽस्याऽधिकरणस्य ब्रह्मणि श्रुतिसमन्वयदार्ढ्यार्थतया प्रवृत्तत्वात्। तदेतत् स्फुटीकृतं 'साङ्ख्यादयस्तु प्रमाणान्तरगम्यमेवेति मन्यमानाः—'इतीक्षत्यधिकरणश्रीशाङ्करभाष्येण। अत एवाऽस्याऽधिकरणस्य समन्वयदृढीकारार्थतया समन्वयाधिकरणाव्यवहितोत्तरत्वेन सङ्गतिः, न चतुर्थपादे।

सूत्रार्थस्तु अनुमानादिप्रमाणान्तरसिद्धं जगत्कारणं न वेदान्तैरनूद्यते, अशब्दं हि तत्, मुख्यवृत्त्या उपनिषद्गतसदादिकारणवाचिशब्दाप्रतिपाद्यत्वादिति यावत्। कुतोऽशब्दत्वं? ईक्षतेः, 'तदैक्षत'इति सद्रूपस्य कारणस्येक्षणश्रवणादिति। अत्र पक्षवाचकपदस्य साध्यभागे प्रतियोगिभागे चाऽध्याहारः। न चाऽशब्दं न जगत्कारणं, ईक्षतेरिति सूत्राक्षरयोजनसम्भवे बहुपदाध्याहारो न युक्त इति वाच्यम्। आनुमानिकप्रधानानुवादिनो वेदान्ता न ब्रह्मणि तात्पर्यलक्षणसमन्वयमर्हन्तीति पूर्वपक्षिणः साङ्ख्यस्य प्रत्यवस्थानेन तन्निरासार्थेक्षतिसूत्रस्य उक्ताध्याहारं

विना पूर्वपक्ष्यभिमावनिवारकत्वासम्भवात्, 'अशब्दम्'इत्यस्य तादृशसाध्यानुगुणहेत्वभिधायित्वेन प्रथमान्तस्याऽपि हेतुपरत्वाश्रयणात् । उक्तहेतोः स्वरूपासिद्धिवारणार्थं सूत्रे ईक्षतेरिति निर्देशः । 'देवाऽऽत्मशक्तिं स्वगुणैर्निगूढाम्—'इति श्रुत्या सत्त्वादिगुणत्रयरूपमायायाः शक्तित्वं प्रतिपाद्यते, शक्तिश्च शक्तिमत्परतन्त्रेति शक्तेरस्वातन्त्र्यं, साङ्ख्यानुमानेन तु प्रधानस्य स्वातन्त्र्यं तैरङ्गीकृतं, तच्च स्वतन्त्रं प्रधानं न श्रुतिभिः मुख्यवृत्त्या प्रतिपाद्यत इति सुष्ठूक्तमशब्दत्वमस्मदाचार्यैः । अस्मदाचार्यभाष्ये तत्रतत्र किञ्चिद्भेदकल्पनेनोपाहितं शुद्धमिति द्वे ब्रह्मणी प्रतिपादिते, तत्रोपाहित इव शुद्धेऽपि 'तत्त्वमसि'इतिश्रुतिगततत्पदस्य वाच्यत्वमिष्टमेव, 'गौरनित्या'इत्यादौ अनित्यत्वरूपविशेषणान्वयानुपपत्त्या गोत्वरूपविशेषणत्यागेन गोशब्दस्य विशेष्यीभूतव्यक्तिपरत्वेऽपि शक्तत्वव्यपदेशवत् सर्वज्ञत्वादिविशेषणप्रहाणेन विशेष्यचैतन्यमात्रपरस्य सद्ब्रह्मादिशब्दस्याऽपि शक्तत्वसम्भवात्, 'गौर्नित्या'इत्यादौ नित्यत्वरूपविशेषणान्वयानुरोधेन गोशब्दस्य जातिपरत्वात् विशेष्यप्रहाणाच्च लक्षणा । न च तर्हि निर्विशेषे ब्रह्मणि ब्रह्मादिपदानां लक्षणोक्तिः प्राचीनानां कथं सङ्गच्छत इति शङ्क्यम्, 'विशेषणीभूतमायांशप्रहाणेन लक्षणोक्तिरौपचारिकी'इति बिन्दुटीकायां गौडब्रह्मानन्दस्वामिभिरुक्तत्वात् ।

यद्यपि जगत्कारणत्वाद्युपलक्षितनिर्विशेषब्रह्मज्ञानादेवाऽज्ञाननिवृत्तिः, तथाऽपि उपलक्ष्यज्ञानस्य उपलक्षणधर्मविशिष्टब्रह्मज्ञानं विना असम्भवात् उपहितज्ञानस्याऽऽवश्यकत्वात् उपहितब्रह्मज्ञानस्य मोक्षप्रयोजकत्वात् उपहितब्रह्मणि जगत्कारणत्वलक्षणप्रमाणशास्त्रसमन्वयानामवश्यवक्तव्यतया अस्मद्भगवत्पादी-

यच्चतुःसूत्रीभाष्ये उपहितेऽपि ते प्रतिपादिताः, अतः शुद्धज्ञानस्य मोचकत्वं, उपहितज्ञानस्य शुद्धज्ञाननिष्पादकतया मोक्षप्रयोजकत्वं, अविद्यादेस्तु मोक्षप्रयोजकज्ञानविशेष्यत्वाभावान्मोक्षाप्रयोजकत्वम् । अत एव 'गौणश्चेन्नाऽऽत्मशब्दात्'इत्यात्मशब्दः उपहितात्मपरः, 'तन्निष्ठ—'इति सूत्रे तत्पदमीक्षितृत्वविशिष्टब्रह्मपरम्, उपहितब्रह्मनिष्ठाया अपि ब्रह्मप्राप्तिप्रयोजकत्वात् ।

एतेन 'अपि चाऽत्र सदेव—'इत्यादिः मध्वचन्द्रिकाग्रन्थः परास्तः ।

माध्वास्तु—'यतो वाचो निवर्तन्ते—'इत्यादिना ब्रह्मणः अवाच्यत्वावगमात् कथं ब्रह्मणि शास्त्रसमन्वयः ?—इति प्राप्ते—

'तं त्वौपनिषदं पुरुषम्—', 'नाऽवेदविन्मनुते तं बृहन्तम्,' 'तमेवैकं जानथ आत्मानं पुरिशयं पुरुषं ईक्षत'इत्यादिना शास्त्रेणैव ब्रह्मण ईक्षणीयत्वोक्त्या ब्रह्म सर्वशास्त्रवाच्यम्,'यतो वाचः—'इत्यादिकं तु दुर्ज्ञानत्वाभिप्रायमित्याहुः ।

तन्न, अवाच्यमिति पूर्वपक्षे वाच्यत्वसाधकश्रुतेरेव सिद्धान्तहेतुतया उपन्यसनीयत्वेन ईक्षतेः हेतुत्वेनोपन्यसनस्य तस्य हेतुत्वप्रसाधनस्य च शिरोवेष्टनेन नासिकास्पर्शनतुल्यत्वात् ।

इति मध्वचन्द्रिकाखण्डने ईक्षत्यधिकरणं समाप्तम् ।

सू० आनन्दमयोऽभ्यासात् १ । १ । १२ ।

'ब्रह्म पुच्छम्'—इत्यत्र श्रुतं ब्रह्म स्वप्रधानं, नाऽऽनन्दमयावयवत्वेनाऽप्रधानं, ब्रह्ममुख्यानन्दपदस्याऽभ्यासात्, 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति'इति ब्रह्मशब्दाभ्यासाच्च । न चाऽत्र पुच्छशब्दः अवयवरूपविकारपरो ब्रह्मणः प्राधान्यं निरुणद्धि, आनन्दमयस्याऽन्नमयादिविकारप्रायपाठात् विकाररूपतया तन्निरूपितावयवत्वस्य

सर्वप्रतिष्ठाभूते ब्रह्मण्यसम्भवेन पुच्छपदेन प्रतिष्ठापदलभ्यस्याऽऽनन्दमयजगत्स्थितिहेतुरूपार्थस्य दार्ढ्यार्थमनुवादात् । 'पुच्छेनैव वयांसि वासो वृक्षं प्रतितिष्ठन्ति' इति तैत्तिरीयश्रुतौ पुच्छपदस्य स्थितिहेत्वर्थता स्पष्टं प्रतीयत इति ।

यत्तु अद्वैतिमते प्रथमपादस्य स्पष्टब्रह्मलिङ्गवाक्यविचारत्वं, द्वितीयतृतीययोः अस्पष्टब्रह्मलिङ्गविचारत्वमुक्तमयुक्तं, 'सर्वत्र प्रसिद्धोपदेशात्' इत्यादिद्वितीयपादीयाधिकरणेषु 'सर्वं खल्विदं ब्रह्म' इत्यादिसार्वात्म्यादिस्पष्टब्रह्मलिङ्गस्य विचारितत्वेन पादार्थसाङ्कर्यादिति,

तन्न, ब्रह्मलिङ्गस्य यत् स्पष्टत्वं तस्य भाष्यभामत्यादिरीत्या जडजीवमात्रधर्मतया झटितिप्रतीयमानसमन्वितव्यपदार्थवृत्तिधर्मासमभिव्याहृतत्वरूपत्वात् भवदुदाहृतद्वितीयपादीयसार्वात्म्यादिधर्मस्य जीवधर्मतया झटितिप्रतीयमानमनउपकरणकत्वरूपमनोमयत्वादिलक्षणधर्मसमभिव्याहृतत्वेन स्पष्टब्रह्मलिङ्गत्वाभावेन पादार्थसाङ्कर्याप्रसक्तेः, प्रथमपादीयान्तस्तद्धर्माधिकरणादिस्थितापहतपाप्मत्वादिब्रह्मलिङ्गस्य 'हिरण्मयः पुरुषो दृश्यते' इत्यादिनोक्तेन जीवेश्वरोभयवृत्तितया झटितिप्रतीयमानेन शरीरनखवत्त्वादिना समभिव्याहृतत्वेऽपि जीवमात्रधर्मतया झटितिप्रतीयमानधर्मसमभिव्याहृतत्वाभावेन स्पष्टब्रह्मलिङ्गत्वाक्षतेः ।

यत्तु द्वितीयपादस्य सविशेषब्रह्मनिष्ठत्वं तृतीयपादस्य निर्विशेषनिष्ठत्वमित्यद्वैत्युक्तमसत्, द्वितीये प्रथमाधिकरणे उक्तस्याऽविद्यादिसर्वप्रपञ्चभ्रमाधिष्ठानत्वरूपस्य सार्वात्म्यस्य सविशेषब्रह्मवृत्तित्वासम्भवात्, तृतीये दहराधिकरणोक्तस्य सत्यकामत्वादेर्निर्विशेषब्रह्मनिष्ठत्वासम्भवादिति,

तन्न, सविशेषब्रह्मनिष्ठत्वस्य विवक्षितधर्मकब्रह्मप्रतिपादक-

वाक्यविचारत्वरूपत्वात्, निर्विशेषनिष्ठत्वस्याऽविवक्षितधर्मकब्रह्म-वाक्यविचारत्वरूपत्वात्, द्वितीयपादीयसर्वप्रपञ्चभ्रमाधिष्ठान-स्वरूपसार्वात्म्यादेरुपास्यतया विवक्षितत्वात् सविशेषनिष्ठत्वा-विघातात्, तृतीयपादविचारितधर्माणां ज्ञेयब्रह्मोपलक्षकतया तेषु विवक्षितत्वाभावात् निर्विशेषनिष्ठत्वाविघातात् ।

यद्यपि द्वितीये अत्राधिकरणं निर्विशेषनिष्ठं, तृतीये दह्-राधिकरणं सविशेषनिष्ठं, तथाऽपि प्रायेण द्वितीयतृतीयपा-दयोः सविशेषनिर्विशेषनिष्ठत्वान्न पादसाङ्कर्यम् । मध्वभाष्ये-ऽपि 'प्रायिकत्वाच्चाऽध्यायानां पादानाम्–'इत्यनेन ग्रन्थेन प्रा-यिकत्वाभिप्रायेणैवाऽध्यायपादार्थौ वर्णितौ ।

यत्तु चतुर्थपादे प्रधाने ब्रह्मलक्षणातिव्याप्तिवारणमित्य-द्वैत्यभिमतमयुक्तं, तन्मते आनुमानिकाधिकरणादौ अव्यक्ता-दिशब्दितस्य कारणे प्रधानत्वमाशङ्क्याऽविद्यारूपत्वस्थापनेन ब्र-ह्मलक्षणस्य प्रधानेऽतिव्याप्त्यभावेऽप्यविद्यायामतिव्याप्त्यपरि-हारादिति,

तन्न, ईक्षादिघटितकर्तृत्वसमानाधिकरणोपादानत्वस्याऽभि-न्ननिमित्तोपादानशब्दितस्य ब्रह्मलक्षणस्याऽस्मद्भगवत्पादा-भिमतस्य जडरूपाविद्यायामप्रसक्तत्वेनाऽतिव्याप्तेरभावात् ।

यत्तु अद्वैतिमते पादक्रमोऽनुपपन्नः, सुबोधस्य पादस्य प्राथम्ये प्रथमपाद आनन्दमयादौ निर्विशेषविचारायोगः, दुर्बो-धस्य पादस्य प्राथम्ये तु स्पष्टब्रह्मलिङ्गानां प्रथमपादे विचारायो-गः, ईक्षत्यधिकरणोक्तासन्दत्वस्य व्यवहितचतुर्थपादे प्रकृत्य-धिकरणे व्युत्पादने हेत्वभाव इति,

तन्न, प्रथमपादोक्तजगत्कारणत्वतदाक्षिप्तसर्वज्ञत्वसर्वशक्ति-त्वनित्यव्यापित्वादि सिद्धवत्कृत्य तदुपजीवनेन द्वितीयतृतीय-

पादानां प्रवृत्ततया प्रथमद्वितीयपादयोरुजीव्योपजीवकभावमङ्गत्यवगमेनोपजीव्यप्राथम्यन्यायेन प्रथमद्वितीयपादयोः क्रमोपपत्तेः, ईक्षत्यधिकरणे ईक्षणश्रवणेन प्रधानस्य कर्तृत्वांशे अशब्दत्वं व्युत्पादितम्, ईक्षत्यधिकरणेन सङ्गतिलाभेनाऽऽनन्दमयाधिकरणं प्रवृत्तम्, तत्र तेन सङ्गत्याऽन्यदन्यादित्येवंरीत्या वाक्यान्वयाधिकरणपर्यन्तमधिकरणानि प्रवृत्तानि, अनन्तरं चाऽऽदौ कर्तृत्वांशेऽशब्दत्वेन व्युत्पादितस्य प्रधानस्योपादानत्वांशे सशब्दत्वशङ्कायां तन्निराकरणार्थं प्रकृत्यधिकरणप्रवृत्तेर्युक्तत्वात् ।

यत्तु आनन्दमयस्य ब्रह्मत्वेऽन्नमयादिविकारप्रायपाठत्यागप्रसङ्गोऽदैत्युक्तोऽसङ्गतः, अन्नमयप्राणमयादावपि मयटः प्राचुर्यार्थतयाऽऽनन्दमय इवाऽन्नमयादिषु चतुर्ष्वपि ब्रह्मत्वसत्त्वेन विकारप्रायपाठस्यैवाऽसिद्धेरिति,

तन्न, प्राणमयमनोमययोर्मयटो 'द्व्यचश्छन्दसि' इति च्छन्दोविषयेण विशेषशास्त्रेण विकारार्थत्वस्य वक्तव्यतया 'तत्प्रकृतवचने मयट्' इति च्छन्दोऽच्छन्दःसाधारणेन सामान्यशास्त्रेण प्राचुर्यार्थत्वाश्रयणायोगात्, 'पदे जुहोति,' 'आहवनीये जुहोति' इति विशेषसामान्यशास्त्रयोः प्राबल्यदौर्बल्यव्यवस्थायाः पूर्वतन्त्रे निर्णीतत्वात्, प्राणमनोमयरूपविकारक्रमानुरोधेन विज्ञानमयानन्दमययोरपि मयटो विकारार्थत्वावश्यकतयाऽऽनन्दमयस्य ब्रह्मत्वे विकारप्रायपाठत्यागापत्तेरवर्जनीयत्वात् । न च विकारावयवार्थविषयक'द्व्यचश्छन्दसि' इतिसूत्रपर्यालोचने क्वचि च्छन्दसि विकारार्थमयडसम्भवप्रतीत्या च्छन्दसि क्वचिदानन्दमयपदे प्राचुर्यार्थत्वमेवाऽऽवश्यकमिति शङ्क्यम्, मयट आनन्दमये प्राचुर्यार्थत्वेऽपि 'समानाधिकरणनि-

जातीयदुःखाल्पत्वप्रतियोगिकप्राचुर्यं मयडर्थः, उत व्यधिकरणसजातीयानन्दाल्पत्वप्रतियोगिकं प्राचुर्यं मयडर्थः ?–'इति प्राचुर्यनिरूपकभेदेन 'प्रचुरब्राह्मणो ग्रामः,''प्रकाशप्रचुरः सविता'इत्यादिव्यपदेशदर्शनात् सन्देहे सति समानाधिकरणविजातीयाल्पत्वप्रतियोगिकप्राचुर्यस्य विकारार्थपर्यवसायिनः प्राणमयमनोमयादिप्रायपाठानुरोधेन ग्राह्यत्वात्, व्यधिकरणसजातीयाल्पत्वप्रतियोगिकप्राचुर्यग्रहणे विकारार्थपर्यवसायिप्रायपाठानुगुण्यं न सेत्स्यति। अत 'आनन्दमयः'इत्यत्र मयटो विकारप्रायपाठानुगुणप्राचुर्यार्थस्य विकारपर्यवसायिनो ग्रहणस्याऽऽवश्यकतयाऽऽनन्दमये विकारार्थत्वस्य निष्प्रत्यूहं सिद्धेः। न च 'सैषाऽऽनन्दस्य–'इत्यादिना व्यधिकरणसजातीयानन्दाल्पत्वप्रतियोगिकत्वमुत्तरोत्तरानन्देऽवधीयमानमानन्दमये मयटो व्यधिकरणसजातीयानन्दाल्पत्वप्रतियोगिकप्राचुर्यार्थत्वे नियामकमस्तीति शक्यम्, तत्रोत्तरोत्तरजीवानन्दस्य पूर्वपूर्वजीवानन्दादुत्कर्षप्रतिपादनेऽपि परब्रह्मानन्दस्य जीवानन्दापेक्षयोत्कर्षप्रतिपादनाभावेन तादृशग्रन्थस्याऽऽनन्दमये मयटः स्वव्यधिकरणजीवानन्दाल्पत्वप्रतियोगिकब्रह्मानन्दप्राचुर्यार्थत्वं प्रत्यनियामकत्वात्। 'स एको ब्रह्मण आनन्दः'इत्यत्र ब्रह्मपदोक्तस्य पूर्वपर्यायस्थितप्रजापतिरूपजीवानन्दापेक्षया शतगुणोद्रिक्तानन्दवत्त्वावगमेऽपि श्रीमच्छङ्करभगवत्पादमत इव मध्वमतेऽपि 'स एको ब्रह्मण आनन्दः'इति ब्रह्मपदस्य चतुर्मुखपरत्वाभ्युपगमेन ब्रह्मानन्दस्य तत्पर्यायेणाऽपि जीवानन्दापेक्षयोत्कर्षाप्रतिपादनात्। तादृशषष्ठ्यन्तब्रह्मपदस्य परब्रह्मपरत्वमपि न सम्भवति, 'ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः'इति तादृशब्रह्मानन्दस्य परिच्छेदावगमात्।

एतेन 'आनन्दमये ब्रह्मत्वस्वीकारेऽपि न मयटो मुख्यार्थोल्लङ्घनम्—'इत्यादिर्मध्वचन्द्रिकाग्रन्थः परास्तः, तत्र मयटः समानाधिकरणविजातीयाल्पत्वप्रतियोगिकप्राचुर्यार्थत्वस्याऽनुपदोक्तरीत्या वक्तव्यतया तादृशप्राचुर्यविशिष्टार्थकानन्दमयपदार्थस्य दुःखमिश्रत्वेन परब्रह्मत्वासम्भवेन तस्य ब्रह्मत्ववादिना मयण्मुख्यार्थोल्लङ्घनावश्यकत्वात्।

यत्तु न्यायरक्षामणौ प्राचुर्यस्य विशेष्यत्वे समानाधिकरणविजातीयाल्पत्वप्रतियोगिकत्वं, प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयाल्पत्वप्रतियोगिकत्वमिति व्यवस्था। प्रथमस्योदाहरणं 'ब्राह्मणप्रचुरो ग्रामः'इति, द्वितीयस्योदाहरणं 'प्रचुरप्रकाशः सविता'इति। 'प्रकाशप्रचुरः सविता'इति व्यवहारस्तु घनतुहिनच्छायापगमकालीने सवितरि, तत्काल एव सवितरि तमोऽल्पत्वप्रसक्तेरिति,

तन्न, निदाघकाले मध्यान्ह्ने घनतुहिनमैहिकेयच्छायादिप्रसक्तिरहिते सवितरि 'प्रचुरप्रकाशः सविता,' 'प्रकाशप्रचुरः सविता'इतिप्रामाणिकमहाजनव्यवहारप्रसिद्धेस्तदुक्तव्यवस्थाया निर्मूलत्वात्।

यत्तु आनन्दमयस्य ब्रह्मत्वे तन्निरूपितावयवत्वस्य ब्रह्मण्यसम्भवेन 'ब्रह्म पुच्छम्'इत्यत्र ब्रह्मपदस्य मुख्यार्थोल्लङ्घनापत्तिरित्यद्वैत्युक्तमयुक्तं, 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स पुच्छम्'इत्यादिश्रुत्याऽवयवावयविनोरानन्दमयब्रह्मणोरैक्यसिद्धेः। केशात्मकावयवस्य श्रीकृष्णस्य—

'व्याप्तं त्वयैकेन दिशश्च सर्वाः—'

इति ब्रह्मशब्दार्थपूर्णतोक्तेश्चेति,

तन्न, 'स शिरः स दक्षिणः पक्षः'इत्यादिमध्वोदाहृतश्रुतेः क्वाऽपि वेदकोशेऽनुपलब्ध्या तदध्येतृपुरुषानुपलब्ध्या च शशशृङ्गतुल्यत्वात्, क्षीराब्धिशायिभगवत्केशस्य परिपूर्णब्रह्मरूपत्वे तस्य व्यापकतया 'उद्बबर्हाऽऽत्मनः केशौ-'इति उत्पाटनोक्त्यसङ्गतेः । न हि विभुत्वयुक्तस्याऽऽकाशस्योत्पाटनं सम्भवति । श्रीकृष्णस्य केशत्वोक्तिस्तु 'मत्केशेनाऽपि कंसादिवधः कर्तुं शक्यते, एतद्विषये भवद्भिः शङ्का न कार्या'इति रीत्या कंसादिवधस्याऽनायाससाध्यत्वाभिप्राया ।

यत्तु 'ब्रह्म पुच्छम्'इत्यत्र ब्रह्मणः स्वप्रधानतया विवक्षितत्वमानन्दमयस्य तु जीवत्वमेवेत्यङ्गीकर्तृश्रीमच्छाङ्करमते 'सोऽकामयत'इत्यत्राऽव्यवहितपूर्वग्रन्थस्थपरामर्शस्वभावपुँल्लिङ्गतच्छब्दानुपपत्तिः, पुच्छब्रह्मणो नपुंसकलिङ्गशब्दनिर्दिष्टत्वात्, आनन्दमयस्य च भवन्मते जीवत्वात्, 'आत्मन आकाशः'इत्यात्मनो व्यवहितत्वादिति,

तन्न, सर्वनामस्वभावापर्यालोचनाविजृम्भितत्वात् । 'ब्रह्म पुच्छम्'इत्यत्र ब्रह्मपदस्य परब्रह्मपरत्वं मध्वभाष्येऽप्युक्तं, तच्च ब्रह्माऽऽनन्दामयापेक्षया सन्निकृष्टं, 'सोऽकामयत'इत्यत्र सन्निकृष्टपरामर्शस्वभावेन सर्वनामप्रातिपदिकेन सन्निकृष्टं पुच्छं ब्रह्म परामृष्टव्यं, न त्वानन्दमयः, विप्रकृष्टत्वात्, पुँल्लिङ्गं तु पाशाधिकरणन्यायेन प्रधानप्रातिपदिकानुसारेण ब्रह्मण्येव व्यवहितात्मशब्दाभिप्रायेण नेतव्यम् । अन्यथा गुणभूतलिङ्गानुसारेणाऽऽनन्दमयस्य व्यवहितस्य ग्रहणे प्रधानभूतं प्रातिपदिकमन्यथाकृतं स्यात् ।

यत्तु मनोमयपर्याये 'यतो वाचो निवर्तन्ते-'इति मनोमयस्य ब्रह्मत्वमुक्तम्, अतो मनोमयो ब्रह्मेति,

तन्न, उपक्रमस्थ'मनोमयः'इति मयटा विकारार्थकेन मनोमयस्याऽब्रह्मत्वनिश्चयादुपसंहारगतस्य 'यतो वाचः—'इत्यस्य तत्पर्यायगतस्योपक्रमाधिकरणन्यायेन प्राशस्त्यपरतया योजनीयत्वात्।

यत्तु न निर्गुणब्रह्मपरमानन्दमयाधिकरणं, तद्विषयश्रुतिश्च, 'कामाच्च'इति सूत्रे 'सोऽकामयत'इति श्रुतौ च कामादिगुणविशिष्टस्यैवोक्तेरिति,

तन्न, गुणस्य कथनेऽपि तत्र महाविवक्षाभावेनाऽविवक्षितधर्मकब्रह्मपरतयोक्तश्रुतिसूत्राभ्यां निर्विशेषसिद्ध्यविरोधात्। यथा च तत्र गुणाविवक्षा, तथोपपादितमाकरे।

यत्तु 'भेदव्यपदेशात्'इति सूत्रेणाऽस्याऽधिकरणस्याऽभेदप्रातिकूल्येति,

तन्न, व्यावहारिककल्पितभेदस्य सूत्रितत्वेनाऽभेदसिद्ध्यविरोधात्।

यत्तु अन्नमयादीनां पञ्चानां ब्रह्मत्वमिति,

तन्न, अन्नमयप्राणमयमनोमयविज्ञानमयानां ब्रह्मत्वे 'ब्रह्मविदाप्नोति परम्'इतिश्रुत्युक्तब्रह्मप्राप्तिरूपमोक्षस्य 'एतमन्नमयमात्मानमुपसङ्क्रम्य, एतं प्राणमयमात्मानमुपसङ्क्रम्य—'इत्यादावन्नमयोपसङ्क्रमणेनैव सिद्धतया 'अन्नमयमुपसङ्क्रम्य'इत्युक्त्वा प्राणमयाद्युपसङ्क्रमणस्य कथनानुपपत्तेः।

न चाऽन्नमयादीनां ब्रह्मतयाऽनन्तभेदेऽप्यन्नमयप्राणमयादिशब्दानां भेदात् 'अन्नमयमुपसङ्क्रम्य', 'प्राणमयमुपसङ्क्रम्य'इत्यादिनिर्देशोपपत्तिरिति वाच्यम्, अन्नमयप्राणमयादिपदार्थानां परस्परभेदं विनाऽपि शब्दभेदमात्रेण तथा व्यपदेशे 'वटवृक्षमुपसङ्क्रम्य, न्यग्रोधमुपसङ्क्रामति'इत्यादिवाक्यानामपि स्वारसि-

कत्वापत्तेः । न च पञ्चानां ब्रह्मत्वेऽप्यन्नमयप्राणमया-दिस्वरूपाणां रामकृष्णादिस्वरूपवद्भेदादुक्तनिर्देशोपपत्तिः स-म्भवतीति शङ्क्यम्, रामादिविग्रहाणां मनोमयादिविग्रहाणां मनोमयत्वादीनां रामत्वकृष्णत्वादीनां मध्वमते ब्रह्मस्वरूपत्वेन परस्परभेदासम्भवात् । न च घटशरावादीनां मृदात्मनाऽभेदेऽपि परस्परात्मना भेदवन्मनोमयप्राणमयादीनां ब्रह्मात्मनाऽभेदेऽपि मनोमयादीनां परस्परात्मना भेदोपपत्तिरिति शङ्क्यम्, घटत्व शरावत्वरूपधर्माणां भेदात् तद्धर्मविशिष्टरूपेण घटशरावमृदा-त्मकानामपि भेदः सम्भवति, अन्नमयत्वप्राणमयत्वरामत्वकृष्ण-त्वादीनां धर्माणां मध्वमते 'एवं धर्मान् पृथक् पश्यन्—'इति-श्रुत्यनुसारेण ब्रह्मात्मनाभिन्नमनोमयाद्यत्यन्ताभेदस्याऽऽवश्य-कतया तेषां मनोमयादीनां धर्मतोऽपि भेदासम्भवात् ।

विशेषबलादुक्तव्यपदेश इत्यपि न सत्, विशेषस्याऽपि ब्रह्मभेदाभेदाभ्यां विकल्प्य जिज्ञासाधिकरण एव निराकृ-तत्वात्, विशेषाङ्गीकारे प्रमाणाभावाच्च । न हि श्रुतौ स्मृतौ वा धर्मधर्मिणोरत्यन्ताभेदेऽपि विशेषबलादाश्रयाश्रयिभावादि-व्यवहारोपपत्तिरिति वचनं दृश्यते । न चान्यथानुपपत्तिस्तत्र प्रमाणम्, तथाविधान्यथानुपपत्तेरनुपलम्भात् । न च 'सत्यं विज्ञानमानन्दं ब्रह्म'इतिश्रुत्युक्तानां ज्ञानानन्दादीनामपर्यायत्वाय विशेष आश्रयितव्यः, ज्ञानत्वानन्दत्वादिरूपकल्पितप्रवृत्तिनि-मित्तधर्मभेदेनैव विशेष्यस्यैकत्वेऽप्यपर्यायत्वोपपत्तेः । भिन्न-प्रवृत्तिनिमित्तानां शब्दानामेकार्थवृत्तिः सामानाधिकरण्यमिति हि शाब्दाः । न चाऽऽकाश—शब्दाश्रयपदयोरपर्यायत्वार्थं विशेषक-ल्पनं, 'वृक्षो महीरुहः शाखी'इत्यादिकोशादाविव व्याख्यानव्या-ख्येयभावेनाऽऽकाशशब्दाश्रयपदयोरुपपत्तौ तदर्थं शशशृङ्गतु-

रूपस्य विशेषस्याऽकल्पनीयत्वात् । न च गुणगुणिनोरभेदपक्षे घटोपलम्भे शुक्लाद्यनुपलम्भार्थं, भेदाभेदपक्षे तयोरविरोधार्थं 'कालः सदाऽस्ति,' 'देशः सर्वत्रास्ति'इत्यबाधितव्यवहारार्थं विशेषोऽङ्गीकार्य इति शङ्क्यम्, तत्तदसाधारणस्वरूपस्यैव तत्तद्व्यवस्थापकत्वोपपत्तेः, तस्मात् 'अन्नमयमात्मानमुपसङ्क्रम्य' 'एतं प्राणमयमात्मानमुपसङ्क्रम्य'इत्यादिनाऽन्नमयादीनां भेदव्यपदेशात् तेषामब्रह्मत्वमेव। 'अन्योऽन्तर आत्मा प्राणमयः,''अन्योऽन्तर आत्मा मनोमयः—'इत्याद्यन्यशब्दनिर्देशादपि तेषामन्नमयादीनामब्रह्मत्वम । न हि ब्रह्मप्रतियोगिकभेदानुयोगि ब्रह्मेति केनापि ब्रह्मवादिनाऽभ्युपगम्यते । 'एको देवः सर्वभूतेषु गूढः—'इत्यादिश्रुतिविरोधात् । न च—

'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान् विष्णुरैश्वर्यात् पुरुषोत्तमः—'

इति मध्वभाष्योदाहृतपुराणबलेनाऽभेदेऽप्यन्यशब्दनिर्वाह इति वाच्यम । तादृशपुराणवचनस्य प्रामाणिकैः क्वाऽप्यलिखितत्वेन दृश्यमानपुराणकोशेष्वदर्शनेन च मध्वभाष्योदाहृतमाठरायणकौशिकादिवाक्यवदसम्प्रतिपन्नत्वात्, तद्वचनस्य प्रामाणिकत्वे 'तत्त्वमसि'इत्यादिनाऽभिन्नतया प्रतिपादितयोर्जीवब्रह्मणोः 'द्वा सुपर्णा—,' 'जुष्टं यदा पश्यत्यन्यमीशं,' 'पृथगात्मानं प्रेरितारं च मत्वा'इत्यादिजीवब्रह्मभेदवाक्येष्वप्यैश्वर्यबलादन्यादिशब्दोपपत्तेर्माध्वैस्तेषां जीवब्रह्मभेदसाधकतयोपन्यसनानुपपत्तेश्च । किं चाऽन्नमयादीनां ब्रह्मत्वे 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्'इत्यन्नमयादीनां शोध्यत्वोक्तिरयुक्ता ।

यत्तु 'शुध्यन्ताम्'इतिवाक्योक्तान्नमयादयः 'अन्नमय-

मात्मानमुपसङ्क्रामति'इत्यादिवाक्योक्ताऽन्नमयाद्यपेक्षया भिन्नाः प्रकरणान्तरन्यायादिति,

तन्न, अनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरस्य पूर्वतन्त्रीयस्य धात्वर्थभावनामात्रविषयकत्वेनाऽधात्वर्थाभावनारूपमनोमयादिष्वप्रवृत्तेः ।

यत्तु भृगुवाक्ये ब्रह्मशब्दाश्रवणात् तत्प्राप्तिकथनाभावाद्ब्रह्मशब्देन विशेषणाभावेन 'अथैष ज्योतिरथैष विश्वज्योतिः—'इत्यादाविव संज्ञाभेदादन्नमयादीनामब्रह्मत्वमिति,

तन्न, मध्वमते 'अन्नमयमात्मानमुपसङ्क्रामति'इत्यादावपि ब्रह्मशब्दाभावेनाऽन्नमयादीनामब्रह्मत्वापत्तेः । 'अन्योऽन्तर आत्मा प्राणमयः—'इत्यादौ मुक्तप्राप्यत्वानुक्तेस्तत्रोक्ताऽन्नमयादीनामब्रह्मत्वापत्तेः,'अन्नमयमात्मानमुपसङ्क्रामति'इत्यत्र 'एष पुरुषोऽन्नरसमयः'इतिवद्ब्रह्मशब्दाभावेन 'अथैष ज्योतिः'इतिवदन्नमयसंज्ञाभेदान्मध्वमतेऽन्नरसमयापेक्षयोपसङ्क्रमवाक्योक्ताऽन्नमयस्य भेदापत्तेः । किं चाऽन्नमयादीनां ब्रह्मत्वे भवतां प्रमाणतमत्वेनाऽभिमते भागवते श्रुतिगीतायां—

'दृतय इव श्वसन्त्यसुभृतो यदि ते नु विधा
महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
सदसतः परमं त्वं यदवशेषमृतम्—'

इति श्लोकेऽन्नमयादिषु चरमस्यैव ब्रह्मत्वोक्त्याऽन्नमयादीनां चतुर्णामब्रह्मत्वसिद्धिर्विरुध्येत ।

यच्चान्नमयादीनां पुच्छब्रह्मणि बुद्ध्यवतारं प्रति द्वारत्वेनोपदेशोऽन्नमयादीनां चाऽऽनन्दरूपब्रह्मणि बुद्ध्यवतारार्थं भृगुवल्ल्यां द्वारत्वेनोपदेशश्चाऽयुक्तः, द्वारत्वेनैव तेषामुपदेश्यत्वेन ब्र-

ह्मत्वेनोपदेशायोगादिति,

तन्न, चन्द्रारुन्धत्योर्बुद्ध्यवतारार्थं 'शाखाग्रं चन्द्रः, इयं स्थूला ताराऽरुन्धती'इत्यादौ द्वारभूतानामपि चन्द्रत्वारुन्धतीत्वादिनोपदेशदर्शनात्।

यत्तु 'अन्नं ब्रह्म'इत्यनुक्त्वा 'आनन्दो ब्रह्म'इति वक्तुं नाऽशक्यं, येनाऽन्नादेर्द्वारत्वं स्यादिति,

तन्न, चन्द्रे बुद्ध्यारोहसाधनमार्गान्तरसत्त्वेऽपि 'शाखाग्रं चन्द्रः'इत्यत्र शाखाग्रस्य चन्द्रत्वोक्तिवदत्राऽपि मार्गान्तरसत्त्वेऽन्नब्रह्मत्वोपदेशस्याऽपि ब्रह्मणि बुद्ध्यवतारमार्गत्वानपायात्।

यत्तु 'सत्यं ज्ञानमनन्तम्'इति स्वरूपलक्षणेन ब्रह्मोपादिश्य पुनस्तस्याऽन्नमयादिशब्दितदेहादिरूपताभ्रान्तिमुत्पाद्य पुनः पुच्छवाक्येन तदुपदेशायोग इति,

तन्न, 'सत्यम्—'इत्यादिना ब्रह्मस्वरूपावगमेऽप्यन्नमयादिपञ्चकोशाधारत्वेन ब्रह्मस्वरूपभानार्थं देहादिरूपतोक्तिपूर्वकं पुच्छपदेन कोशाद्याधारतया ब्रह्मोपदेशस्याऽऽवश्यकत्वात्।

यत्तु कोशानां पराक्त्वात् तैः प्रत्यग्रूपब्रह्मणि चित्तस्य प्रावण्यसम्पादनमयुक्तमिति,

तन्न, न हि पृथिव्या पृथिवी लक्ष्यते, किन्तु तद्भिन्नेन गन्धेन, तथा प्रत्यग्रूपवस्तुना प्रत्यग्रूपलक्षणासम्भवात् तद्भिन्नेन पराग्रूपेणैव प्रत्यगुपलक्षणावश्यकत्वात्।

यत्तु भृगुवल्ल्यां पञ्चमस्थाने 'आनन्दो ब्रह्मेति व्यजानात्'इत्यस्याऽनन्दस्य ब्रह्मत्वादत्राऽऽपि पञ्चमस्थानत्वसाम्यादानन्दवल्ल्यामानन्दमयस्य ब्रह्मत्वमिति,

तन्न, 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्'इत्यत्राऽपि पञ्चमस्थानत्वसाम्यादानन्दमयस्य ब्रह्मत्वापत्तेः,

तत्र भोक्तृत्वसूचिताशुद्धसम्बन्धात् तस्य ब्रह्मत्वासम्भव आनन्दवल्ल्यामपि प्रिय-मोदाद्यवयवकत्वरूपजीवलिङ्गसम्बन्धाद् ब्रह्मत्वासम्भवात् ।

यत्त्वज्ञातब्रह्मतत्त्वं प्रत्यब्रह्मणामन्नमयादीनां ब्रह्मत्वमुपदिश्य पुनर्ब्रह्मपुच्छवाक्येन वास्तवब्रह्मोपदेशायोगः, अज्ञातधर्मतत्त्वं प्रति 'चैत्यवन्दनं धर्मः' इत्युपदिश्य पुनः 'ज्योतिष्टोमो धर्मः' इत्युपदेशादर्शनादिति,

तन्न, धर्मस्य ब्रह्मण इवाऽत्यन्तदुर्ज्ञेयत्वाभावेन तथोपदेशासम्भवेऽप्यत्यन्तदुर्ज्ञेयस्य ब्रह्मणो यथा यथोपदेशो विशेषत्वं सम्भवति, तथा तथोपदेशसम्भवात् ।

यत्तु निरवयवे चित्तमावण्याय 'अयं दक्षिणः पक्षः' इति सावयवोपदेशोऽयुक्त इति,

तन्न, निरवयवेन निरवयवोपलक्षणायोगेन सावयवेनैव तदुपलक्षणावश्यकत्वात् । अन्यथा घटेन घटोपलक्षणापत्तेः ।

यत्तु अन्नमाणमनोविज्ञानानां मध्य एकैकस्याऽप्यानन्दरूपब्रह्मोपलक्षकत्वसम्भवे समुदितानां चतुर्णां ब्रह्मोपलक्षकत्वोक्त्ययोग इति,

तन्न, यस्य पुरुषस्यैकेनोपलक्षणेनोपलक्ष्यस्वरूपं सम्यग् ज्ञायते तं प्रत्येकस्योपलक्षकत्वसम्भवेऽपि यस्य चतुर्भिरेव सम्यगुपलक्ष्यज्ञानं तं प्रति चतुर्णामुपलक्षकत्वोक्तिसम्भवात्, पुरुषत्रैविध्यस्य सर्वैरङ्गीकार्यत्वात् ।

यत्तु 'यतो वा इमानि' इत्युक्तस्य कारणत्वस्य ब्रह्मोपलक्षकत्वसम्भवे कोशानामपि तदुपलक्षकत्वोक्तिर्व्यर्थेति,

तन्न, यस्य पुरुषस्य कारणत्वमात्रेण ब्रह्मोपलक्षणं न जातं तं प्रति कोशानामप्युपलक्षकत्वोक्त्यावश्यकत्वात् ।

यत्तु विरोचनस्येव भृगोरपि 'अन्नं ब्रह्मेति व्यजानात्'-इत्यब्रह्मणि ब्रह्मोद्देशेन ब्रह्मवेदने सिद्धे 'पुनरेव वरुणं पितरमुपससार'इति गुरूपसत्तिदर्शनं विरुद्धमिति,

तन्न, असुरजातेर्विरोचनस्य पापवशात् द्वारत्वाज्ञानेन पुनरुपसत्त्यभावेऽपि देवजातेर्भृगोः पुण्यवशादन्ने द्वारत्वज्ञानात् तदुपसत्त्युपपत्तेः ।

यच्चानन्दवदन्नादीनां ब्रह्मत्वमभ्युपेयं, न ब्रह्मप्रतिपत्तिद्वारत्वादब्रह्मत्वं, 'भार्गवी वारुणी विद्या, परमे व्योमन् प्रतिष्ठिता'इति स्वयमेव श्रुत्या वारुण्या विद्याया ब्रह्मपरत्वोक्तेः, 'अधीहि भगवो ब्रह्म'इतिब्रह्मप्रश्नोत्तरत्वात् 'स तपस्तप्त्वा, अन्नं ब्रह्मेति व्यजानात्'इति श्रवणानन्तरभाविनिदिध्यासनाख्यतपसाऽपरोक्षीकृतत्वलिङ्गात् 'अन्नं ब्रह्म'इत्यादिब्रह्मशब्दात् 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते'इति ब्रह्मलक्षणजगत्कारणत्वकथनाच्चेति,

तन्न, अन्नप्राणमनोविज्ञानद्वारकप्रतिपत्तिविषयस्याऽऽनन्दस्य ब्रह्मत्वेन 'भार्गवी वारुणी'इत्युक्तविद्यायाः परमव्योमशब्दितब्रह्मनिष्ठत्वोपपत्तेः । 'राजा गच्छति'इत्युक्ते सपरिवारस्य राज्ञो गन्तृत्वप्रतीतिवत् 'अधीहि भगवो ब्रह्म'इत्यत्र ब्रह्मप्रतिपत्तिहेतुभूतद्वाररूपपदार्थपरिकरोपेतस्य ब्रह्मणोऽध्यापनीयत्वप्रतीत्याऽन्नप्राणादिरूपद्वारोपदेशस्याऽपि प्रश्नानुगुणत्वात् । 'स तपस्तप्त्वा, अन्नं ब्रह्मेति व्यजानात्'इत्यस्य सः—भृगुः, तपः—आलोचनं, 'तप आलोचने'इति वचनात्, अन्नादेर्ब्रह्मजन्यत्वेन तस्य साक्षाद्ब्रह्मत्वासम्भवेन ब्रह्मप्रतिपत्तिद्वारतयाऽस्य ब्रह्मत्वमित्यालोचनाकारः, तप्त्वा—तादृशालोचनं कृत्वा, अन्नं ब्रह्म—अन्नस्य ब्रह्मजन्यत्वात् कार्येण कारणानुमानमिति रीत्याऽन्नं ब्रह्मप्रतिपत्तिसाधनम्, इति व्यजानात्—इति ज्ञानं प्राप्तवानित्यर्थकतया भवदभिमताऽब्रह्मत्वासाधक-

त्वात्। 'अन्नं ब्रह्म'इति ब्रह्मशब्दस्य 'शाखाग्रं चन्द्रः'इति शाखायां चन्द्रशब्दश्रवणेऽपि चन्द्रत्वासाधकत्ववदन्ने ब्रह्मत्वासाधकत्वात्। 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते'इति ब्रह्मलक्षणस्य 'तदैक्षत बहु स्यां प्रजायेयेति, तत् तेजोऽसृजत,' 'तदैक्षत बहु स्यां प्रजायेयेति, तदपोऽसृजत'इत्यादौ तेजआद्यचेतनेषु बहुभवनसङ्कल्पपूर्वकस्रष्टृत्वरूपब्रह्मलिङ्गस्योपचारेण निर्देशवदचेतनेऽन्न उपचारेण निर्देशात् तेन निर्देशेनाऽन्नस्य ब्रह्मत्वासिद्धेः। तत्र तेजआदिपदस्य तदन्तर्यामिब्रह्मपरत्वेऽन्नादिशब्दस्याऽप्यन्नाद्यन्तर्यामिब्रह्मपरत्वमेवाऽऽपद्यते। न च तन्माध्वानामिष्टम्, अन्नादीनां रामकृष्णादिवत् साक्षाद्ब्रह्मत्वस्य तैरुक्तत्वात्।

यत्त्वन्नमयादिपर्यायेषु श्लोकस्याऽन्नमयादिरूपावयविविषयत्ववदानन्दमयपर्यायेऽपि 'असन्नेव स भवति'इति श्लोकस्याऽऽनन्दमयरूपावयविविषयत्वं वक्तुं युक्तम्, न त्वानन्दमयावयवपुच्छब्रह्मविषयत्वमिति,

तन्न, अन्नमयादिपर्यायश्लोकेष्वन्नमयादीनां यानि पुच्छानि तेषु निर्दिष्टशब्दानामिदम्पदपृथिवीपदाथर्वाङ्गिरसपदमहःपदानामभ्यासदर्शनेन तच्छ्लोकानां पुच्छरूपावयवाविषयत्वं पुच्छाद्यवयवयुक्तावयविविषयत्वं च स्वीकृतम्। आनन्दमयपर्यायश्लोके 'असन्नेव स भवति'इत्यत्र 'ब्रह्म पुच्छं प्रतिष्ठा'इत्यानन्दमयपर्यायपुच्छावयवप्रयुक्तब्रह्मपदस्याऽभ्यासदर्शनेनाऽऽनन्दमयपर्यायश्लोकस्याऽऽनन्दमयावयव्यविषयत्वपुच्छब्रह्मविषयत्वयोरेव स्वीकार्यत्वात्, ब्रह्मशब्दाभ्यासस्य ब्रह्मणि तात्पर्यलिङ्गत्वात्।

इदं तु बोद्ध्यम्—माध्वमते 'एवं धर्मान् पृथक् पश्यन्—' इत्यादिश्रुत्यनुरोधेनाऽन्नमयत्वप्राणमयत्वादिधर्माणामन्नत्वप्राणत्वा-

दिधर्माणामन्नमयादिशरीराणां ब्रह्मात्यन्ताभिन्नतयाऽन्नमयोपदेशेन 'अन्नं ब्रह्मेति व्यजानात्—' इत्यादिना ब्रह्मोपदेशज्ञानयोर्निष्पन्नतया प्राणमयाद्युपदेशस्य 'प्राणो ब्रह्मेति व्यजानात्—' इत्यादेः 'पुनरेव वरुणं पितरमुपससार' इत्यादेश्च वैयर्थ्यमसाङ्गत्यं च दुर्वारमेव, तत्तद्धर्मशरीराणां ब्रह्मात्यन्ताभिन्नतया धर्मभेदेन वा शरीरभेदेन वा पुनर्ब्रह्मोपदेशतज्ज्ञानयोर्वक्तुमयुक्तत्वादिति।

माध्वास्तु—

'अन्योऽन्तर आत्माऽऽनन्दमयः, तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा, तदप्येष श्लोको भवति, असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्—' इत्यादावानन्दमयो हिरण्यगर्भः, तस्याऽऽनन्दमयशब्दार्थानुगत'शतानन्द'नामवत्त्वात्, रुद्रो वा, 'यश्चाऽऽसावादित्ये—' इत्यानन्दमयस्य सूर्ये श्रुतत्वाद्रुद्रस्य चाऽष्टमूर्तित्वप्रसिद्धेः, चित्प्रकृतिर्लक्ष्मीर्वा, 'सोऽकामयत, बहु स्यां प्रजायेय'- इत्यानन्दमयस्य बहुभावश्रवणात, चित्प्रकृतौ च बहुभाववदचित्प्रकृत्यभिमानित्वेन तदुपपत्तेः, अचित्प्रकृतिर्वा बहुभावश्रवणादेव, जीवमात्रं वा, 'अन्नरसमयः' 'प्राणमयः' इत्युक्तान्नमयादीनामन्नादिविकाराभिमानित्वेन जीवत्वात, तत्प्रायपठितानन्दमयस्याऽपि तत्त्वौचित्यात, सर्वथा नाऽयमानन्दमयो विष्णुः, तस्याऽविकारित्वात्, अतदभिमानित्वाच्च, 'ब्रह्म पुच्छं प्रतिष्ठा' इति विष्णोः पुच्छत्वेनोक्तत्वाच्च, अतः 'सोऽकामयत बहु स्याम्' इत्यादिनाऽन्यस्य जगत्कारणत्वप्रतिपादनात विष्णौ गतिसामान्योक्तिरयुक्ता— इति प्राप्ते—

राद्धान्तः—आनन्दमयो विष्णुरेव, 'असन्नेव स भवति' इत्यानन्दमयाश्रयश्लोके 'तदेव ब्रह्म परमं कवीनां,' 'ब्रह्मशब्दः परे

विष्णौ नाऽन्यत्र कचिदिष्यते—' इति प्रमाणवचनैर्विष्णावेव प्रसिद्धस्य ब्रह्मशब्दस्याऽभ्यासदर्शनात् । न च मयड्विरोधी, तस्य प्राचुर्यार्थत्वात् । न चाऽन्नमयादिष्वपि मयड्विकारार्थः, अन्नमयादिपर्यायेषु 'येऽन्नं ब्रह्मोपासते,' 'ये प्राणं ब्रह्मोपासते,' 'आनन्दं ब्रह्मणो विद्वान्,' 'विज्ञानं ब्रह्म चेद्वेद'इति ब्रह्मशब्दाम्नानेनाऽन्नमयादीनां ब्रह्मतया तेषु मयटः प्राचुर्यार्थत्वात् । 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्'इति चतुर्वेदशिखया,—

'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः ।
ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने—'

इति बृहत्संहितावचनेन च विष्णोः पुच्छत्वपुच्छित्वसम्भवात् । सूत्रे 'आनन्दमय'पदमन्नमयादिपञ्चोपलक्षकम्, आनन्दमयपर्याये ब्रह्मणः पुच्छत्वदर्शनात् जिज्ञास्यत्वं न सम्भवतीतिपूर्वपक्षसूचनार्थं सूत्रे प्राथमिकान्नमयादिकमतिक्रम्याऽऽनन्दमयनिर्देश इत्याहुः ।

तन्न, अन्नमये 'अन्नात् पुरुषः'इति जन्यत्वोक्त्या न जिज्ञास्यब्रह्मत्वमिति पूर्वपक्षोत्थानसम्भवात् तत्सूचनार्थं प्रथमानतिक्रमणार्थं च सूत्रेऽन्नमयस्यैव निर्देष्टव्यतया पञ्चानां ब्रह्मत्वपक्षे चरमस्याऽऽनन्दमयस्य निर्देशानुपपत्तेः । किं चाऽन्नमयस्य ब्रह्मत्वसाधने ब्रह्मशब्दाभ्यासरूपहेत्वसिद्धिश्च, अन्नमयपर्याये 'येऽन्नं ब्रह्म'इति सकृदेव ब्रह्मशब्दश्रवणात् । न चाऽभ्यासस्याऽऽत्मशब्दविषयत्वम्, आत्मशब्दश्च 'अन्नमयमात्मानमुपसङ्क्रामति,' 'अन्नमयमात्मानमुपसङ्क्रम्य—'इत्यादावन्नमयेऽप्यभ्यस्त इति वाच्यम् । अभ्यासस्याऽऽत्मशब्दविषयत्वे '........'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्—'इत्यादौ ब्रह्मशब्दाभ्यासात्—'इतिभगवद्भा-

ष्यविरोधप्रसङ्गात् । न च 'ब्रह्मशब्दाभ्यासात्—'इत्यादिमध्व-भाष्यस्थ'ब्रह्मशब्द'इत्यस्य 'ब्रह्मवाचकशब्द'इत्यर्थः, स च शब्दः आनन्दमयपर्याये ब्रह्मशब्दः, अन्यपर्यायेष्वात्मशब्द इति शङ्क्यम्,'....'तदेव ब्रह्म परमं कवीनाम्,' 'एतमेव ब्रह्मेत्याचक्षते,'

'ब्रह्मशब्दः परे विष्णौ नाऽन्यत्र क्वचिदिष्यते ।

अपूर्णाः परे यस्मादुपचारेण वा भवेत् ।

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।

वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतः—'

इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात्—'इतिमध्व-भाष्यपर्यालोचने बकाररेफादिघटितसमुदायात्मकब्रह्मशब्दस्यै-वाऽभ्यास इत्यवगमेन तद्विरोधप्रसङ्गेनाऽऽत्मशब्दाभ्यासस्य वक्तु-मशक्यत्वात् ।

वस्तुतस्तु जयतीर्थकृत—तत्त्वप्रकाशिकायां 'एकप्रका-राऽसकृदुक्तिरभ्यासः'इत्युक्तत्वेन 'असद्ब्रह्मेति वेद चेत्'इत्यादा-वसद्‌विलत्वप्रकारकब्रह्मशब्दाभ्यासस्याऽप्येकप्रकाराभ्यासत्वाभा-वेन भाष्ये ब्रह्मशब्दाभ्यासोक्तिरप्यसङ्गता ।

इति मध्वचन्द्रिकाखण्डने आनन्दमयाधिकरणं समाप्तम् ।

**सू० अन्तस्तद्धर्मोपदेशात् १ । १ । २०**

अत्राऽद्वैतिनः—

'एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिर-ण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरी-कमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद'इति च्छान्दोग्ये श्रूयते, तत्राऽऽदित्यान्तस्थ आदित्यदेवताविशेषरूपो जीवः उत

परमात्मेति संशयः, हिरण्यश्मश्रुत्वादिरूपवत्त्वस्य 'अरूपमव्ययं—' इतिश्रुतिसिद्धपरमात्मन्यसम्भवेन देवताविशेषरूपजीवे सम्भवात् स एवेति पूर्वः पक्षः।

उन्नामप्रवृत्तिनिमित्ततया सर्वपाप्मोदितत्वस्याऽत्र कथितस्य ब्रह्मासाधारणधर्मत्वात् तदाश्रयतयोक्त आदित्यान्तस्थः परमात्मैव, हिरण्यश्मश्रुत्वादिविशिष्टशरीरवत्त्वस्योपक्रमगतस्याऽपि जीवपरमात्मसाधारणत्वात्। परमात्मपक्षमात्रकमर्त्वपाप्मोदितत्वं यथा परमात्मसाधकं, न तथा तत्र जीवपक्षसाधकम्। परमात्मनोऽपि—

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद!

सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि—'

इतिमोक्षधर्मीयविश्वरूपधरनारायणवचनप्रामाण्यात् सशरीरत्वमावश्यकम्। एतावांस्तु विशेषः—भगवच्छरीरं साक्षान्मायापरिणामो भक्तानुग्रहार्थं स्वेच्छया गृहीतं, न तु कर्माधीनं, जीवशरीरं तु मायानंश्यभूतपरिणामः कर्मायत्तं सुखदुःखभोगार्थमारब्धम्—इति सिद्धान्त इति प्राहुः।

अत्र सर्वपाप्मोदितत्वस्य परमात्मासाधारणधर्मत्वोक्तिरयुक्ता, 'न ह वै देवान् पापं गच्छति—'इति श्रुत्याऽऽदित्यादिदेवानामपि तद्धर्मवत्त्वोक्तेरिति प्रथमा कक्ष्या।

आदित्येन्द्रादीनां 'भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः'-इति श्रुत्या भीतिलक्षणदुःखानुभवस्य पापकार्यस्य श्रवणेन पापावश्यकतया 'न ह वै देवान्—'इति श्रुतेर्मनुष्यादिवद्देवानां पापभूयस्त्वाभावाभिप्रायकताया अवश्यं वाच्यत्वात् न देवानां सर्वपाप्मोदितत्वमिति तस्य परमात्मासाधारणत्वं नाऽनुपपन्नमिति द्वितीया कक्ष्या।

वृक्षाच्छकुन्त उद्गच्छतीत्यादौ शकुन्त उद्गमनापादानतभू-

वृक्षसम्बन्धप्रतीतिवत् 'सर्वेभ्य उदितः' इत्यनेनोद्गमनापादानभूतपापसम्बन्धप्रतीतेरादित्यान्तःस्थपुरुष आवश्यकतया सर्वपापोदितत्वमत्रोक्तं सर्वात्मना पापसम्बन्धशून्यत्वरूपब्रह्मधर्मतां न भजत इति न तस्य ब्रह्मासाधारणधर्मत्वं, किं तु जीवधर्मत्वमेवेति तृतीया कक्ष्या ।

वृक्षादरिव पापानां मूर्तत्वाभावेनोद्गमनापादानत्वस्याऽसम्भवात् 'सर्वेभ्यः पाप्मभ्य उदितः' इत्यस्य गङ्गायां घोषाधिकरणत्वासम्भवेन गङ्गायां घोष इत्यत्र गङ्गापदस्य तीर इव सर्वात्मना सर्वपापसम्बन्धशून्य इत्यर्थे लक्षणाया आवश्यकतया सर्वात्मना पापसम्बन्धशून्यत्वरूपस्य सर्वपापोदितत्वस्य ब्रह्मण्येव सम्भवात् तस्य ब्रह्मासाधारणधर्मत्वमिति चतुर्थी कक्ष्या ।

'सर्वेभ्यः पाप्मभ्य उदितः' इत्यनेन विनिगमनाविरहेण यत्किञ्चित्पापसम्बन्धाभाव एव लक्ष्यतां, स चाऽऽदित्यादिजीवानामपि सम्भवतीति न तस्य ब्रह्मासाधरणधर्मत्वमिति पञ्चमी कक्ष्या ।

'सर्वेभ्यः—' इतिपदस्वारस्येन तद्घटितोक्तवाक्यस्य पापत्वावच्छिन्नपापसामान्यसम्बन्धशून्यत्व एव लक्षणाया वाच्यत्वात् तस्य च परमात्मासाधारणत्वमिति षष्ठी कक्ष्या ।

अनन्तगरुडादीनां नित्यमुक्तानां सर्वात्मना सर्वपापसम्बन्धशून्यत्वसत्त्वात् न तस्य ब्रह्मासाधारणत्वमिति सप्तमी कक्ष्या ।

श्रीमच्छङ्करभगवत्पादमतेऽनन्तगरुडादीनां नित्यमुक्तत्वास्वीकारः, परब्रह्मव्यतिरिक्तस्य नित्यमुक्तस्य स्वीकारे प्रमाणाभावात् । न च 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः'- इति श्रुतिः प्रमाणं, ब्रह्मव्यतिरिक्तानां केषाञ्चिन्नित्यमुक्तानाम-

स्वीकारे सदा वैष्णवस्थानस्य सूरिदृश्यत्वोक्तिविरोधापत्तेरिति वाच्यम् । सूरीणां वैष्णवस्थानद्रष्टॄणां प्रवाहानादितयाऽपि वैष्णवस्थानस्य 'सदा पश्यन्ति'इति सर्वदा सूरिदृश्यत्वोपपत्तेस्तदर्थमप्रामाणिकनित्यमुक्तबहुव्यक्तिकल्पनानुपपत्तेः । तस्मात् सर्वात्मना सर्वपापोदितत्वं परब्रह्मासाधारणधर्म एवेत्यङ्गीकर्तव्या ।

यत्तु नीरूपे ब्रह्मण्युपासनार्थं रूपकल्पनावज्जीवेऽप्युपासनार्थमपहतपाप्मत्वादिकल्पनसम्भवेन न तस्य ब्रह्मासाधारणधर्मत्वमिति,

तन्न, जीवे व्यावहारिकस्य पाप्मनः सत्त्वेन तद्राहित्यं प्रातिभासिकमेव वाच्यम । ब्रह्मणि तु व्यावहारिकपापासम्भवात् तद्राहित्यं व्यावहारिकं, श्रुतेश्च व्यावहारिकविषयत्वेन प्रामाण्यसम्भवे प्रातिभासिकजीवगतापहतपाप्मत्वविषयकत्वासम्भवेन 'स एषः'इतिश्रुत्युक्तापहतपाप्मत्वस्य व्यावहारिकतया ब्रह्मासाधारणधर्मत्वाविरोधात् । न च 'नाम ब्रह्मेत्युपासीत'इत्याद्युपासनास्थले नाम्नि प्रातिभासिकब्रह्मत्वग्रहणवत् 'अथ य एषः—' इत्यादिवाक्यस्याऽप्युपासनापरतया ब्रह्मण्यपहतपाप्मत्वमपि प्रातिभासिकमेव ग्राह्यमिति शङ्क्यम, नाम्नि व्यावहारिकस्याऽपि ब्रह्मत्वस्याऽसम्भवेन नाम्नि ब्रह्मत्वोपासन उपासितविषयस्य ब्रह्मत्वस्य प्रातिभासिकत्वस्वीकारेऽपि ब्रह्मण्यपहतपाप्मत्वस्य 'एष आत्माऽपहतपाप्मा—'इत्यादिश्रुत्यन्तरसिद्धस्य व्यावहारिकस्य प्रकृते उपासनप्रवृत्तिनिमित्ततयाऽनुसन्धेयसर्वपापराहित्यरूपत्वसम्भवे प्रातिभासिकस्य सर्वपापराहित्यस्योपासनप्रवृत्तिनिमित्ततयोपास्यकोटिनिवेशायोगात् । सति सम्भवेऽमुख्यं न ग्रहणमर्हतीति न्यायात् । न चोपासनावाक्य एव सर्वत्राऽपहतपाप्मत्वस-

त्वेन तद्वाक्यस्योपासनकर्तव्यतापरत्वेन तद्वाक्येनोपासनाया व्यावहारिकत्वसिद्धावप्यपहतपाप्मत्वादेर्न व्यावहारिकत्वसिद्धिरिति वाच्यम् । सगुणवाक्यानामुपासनातात्पर्यकत्वेऽप्युपास्यधर्मः किं प्रातिभासिक उत व्यावहारिक इति विमर्शे दहरादिविद्यायां 'सत्यकामः सत्यसङ्कल्पः', 'सत्याः कामाः', 'अथ य इहाऽत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान्—'इत्यादिना काम्यमानानामपहतपाप्मत्वादीनां कामसङ्कल्पादीनां च 'सत्य'शब्देनैव सत्यत्वोक्त्याऽपहतपाप्मत्वादिधर्माणां व्यावहारिकसत्यत्वस्यैवाऽसति बाधके स्वीकर्तुमुचितत्वात् । न च तर्हि उक्तसत्यशब्दबलेन तेषां पारमार्थिकसत्यत्वमेव किं न स्यादिति शङ्क्यम्, 'सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यं'इति बृहदारण्यकश्रुत्या 'सत्यस्य'इतिषष्ठ्यन्तनिर्दिष्टब्रह्मस्वरूपव्यतिरिक्तसर्वसत्यापेक्षया 'सत्यं'इतिप्रथमान्तपदनिर्दिष्टब्रह्मस्वरूपसत्यस्योत्कर्षप्रतीत्या ब्रह्मस्वरूपसत्यापेक्षया धर्मसत्यानामपकर्षावश्यकतयाऽपहतपाप्मत्वादीनां सत्यत्वस्य व्यावहारिकसत्यत्वरूपत्वावश्यकत्वात् । अपकृष्टसत्यत्वमेव हि व्यावहारिकसत्यत्वमुत्कृष्टसत्यत्वं च पारमार्थिकसत्यत्वम् । पारमार्थिकत्वं च कालत्रयाबाध्यत्वम् । व्यवहारकालमात्राबाध्यत्वं व्यावहारिकसत्यत्वम् । 'सत्यं चाऽनृतं च सत्यमभवत्'इति सत्यवादर्थ्येन प्रतिपादितानृतशब्दितप्रातिभासिकत्वं तु प्रतीयमानत्वे सति व्यवहारकालबाध्यत्वमिति व्यवस्था ।

यत्तु स्वर्णे कटकत्वादेरिव कटकेऽपि स्वर्णत्वव्यवहारदर्शनेन कारणधर्मेणाऽपि ब्रह्मकार्यप्रपञ्चनिर्देशासम्भवात् 'कार्यप्रपञ्चधर्मैरेव हिरण्यश्मश्रुत्वादिभिः कारणस्य ब्रह्मणो व्यपदेशः'इति भाष्ययुक्तमयुक्तमिति,

तन्न, कारणधर्मेण कारणतावच्छेदकभिन्नेन कार्यव्यपदेश-स्वीकारे कारणभूतमृत्त्वेन शरावत्वेन कार्यस्य घटस्य शरावो घट इतिव्यपदेशापत्तेः ।

यत्तु 'सविशेषनिरूपणं मोक्षसाधननिर्विशेषज्ञानार्थम्'इति भामती–कल्पतरूक्तमयुक्तम्, 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद'इतिश्रुतसर्वपापनिवृत्तिफलहानाश्रुतफलकल्पनयोरा-पत्तेरिति,

तन्न, निर्विशेषज्ञानविरोधिसर्वपापनिवृत्तिफलस्योपासनस्य निर्विशेषज्ञानार्थत्वसम्भवात्, श्रुतहान्यभावाच्च ।

यत्तु 'निर्विशेषज्ञानार्थत्वम्'इत्यत्र निर्विशेषत्वस्य विशेषाभाव-विशिष्टत्वरूपत्वे तज्ज्ञानस्य विशिष्टज्ञानत्वेन मोक्षहेतुत्वायोगः, विशेषाभावोपलक्षितत्वरूपत्वे काकेन उपलक्षणस्यस्येवोपलक्ष्यमाणा-कारान्तरस्य ब्रह्मणि कल्पनापत्तिः । न च विशेष्यमेवोपलक्ष्य-मिति शक्यं वक्तुम्, विशेषाभावविशिष्टज्ञानेन विशेष्यस्याऽपि ज्ञातत्वादिति,

तन्न, भावाद्वैतपक्षे विशेषाभावविशिष्टज्ञानस्य विशिष्ट-ज्ञानत्वेऽपि मोक्षहेतुत्वाविरोधात् । सर्वाद्वैतपक्षे विशेषत्वाव-च्छिन्नाभाववद् ब्रह्मेत्याकारकज्ञानजन्यं विशेषतदभावनिष्ठप्रका-रत्वानिरूपितब्रह्मनिष्ठविषयतानिरूपकं यत् ज्ञानं निर्विकल्पाख्यं तस्यैव मोक्षहेतुत्वात् । निर्विशेषत्वं चाऽस्मिन् पक्षे इतरविष-यतानिरूपिताविषयताशून्यत्वे सति विषयतावत्त्वम् । इदमेव वि-शेषाभावोपलक्षितत्वमिति शब्देन व्यवह्रियते ।

यत्तु सविशेषज्ञानस्य निर्विशेषापरोक्षहेतुचित्तैकाग्र्यं प्रति सम्पादकत्वमयुक्तम्, निर्विशेषपरोक्षज्ञानाधीनतन्निदिध्यासनेनैव त-दुपपत्तेरिति,

तन्न, उपायस्योपायान्तरादूषकत्वात्। अन्यथा 'व्रीहिभिर्यजेत'इत्यनेनाऽवगतसाधनभावव्रीहीणामेव पुरोडाशयागसाधनत्वसत्त्वे 'यवैर्यजेत'इत्यनेनाऽवगतसाधनभावयवानां पुरोडाशयागसाधनत्वानापत्तेः।

यत्तु दशमस्त्वमसीत्यादिवच्छान्दापरोक्षे ब्रह्मज्ञाने चित्तवशीकरणमनपेक्षितमिति,

तन्न, दशमस्त्वमसीत्यादौ विपरीतभावनारूपप्रतिबन्धकाभावेन चित्तैकाग्र्यानपेक्षणेऽपि 'तत् त्वमसि'इत्यादौ तादृशप्रतिबन्धकसत्त्वेन तन्निवर्तकचित्तैकाग्र्यस्य सविशेषध्यानाद्यधीनस्याऽपेक्षितत्वात्।

यत्तु सविशेषज्ञानं निर्विशेषज्ञानं प्रति न दृष्टद्वारा हेतुः, विशिष्टज्ञानजन्येनाऽज्ञानध्वंसेन चित्तवशीकरणेन वा निर्विशेषज्ञानं प्रति सविशेषज्ञानस्य क्वाऽपि हेतुत्वादर्शनादिति।

तन्न, चित्तवशीकरणस्य विपरीतभावनानिवृत्तिद्वारा विज्ञानहेतुत्वस्य प्रतिबन्धकसत्त्वस्थले सर्वत्र क्लृप्ततया तज्जनकसविशेषध्यानस्य दृष्टविधयैव निर्विशेषज्ञानहेतुत्वाविरोधात्।

एतेन 'किं च सविशेषज्ञानं नाऽदृष्टद्वारा निर्विशेषापरोक्षहेतुः—'इत्यादिः 'श्रुतहान्यापातात्—'इत्यन्तो मध्वपचान्द्रिकाग्रन्थः परास्तः। अनुक्तोपालम्भनत्वात्।

यत्तु भगवति रूपादिकं तात्त्विकमेव, 'तात्त्विकं भगवतो रूप'मित्यन्यत्रोक्तत्वात्, 'हिरण्मयः पुरुषो दृश्यते'इति भगवति हिरण्मयत्वस्य रूपस्याऽपरोक्षत्वोक्तेः। न हि योषित्समित्त्वं दृश्यत इत्युच्यत इति,

तन्न, तात्त्विकं भगवतो रूपमन्यत्रोक्तत्वादित्यस्य भवद्वाक्यस्याऽसङ्गतत्वात्। प्रसिद्धश्रुतिस्मृत्यादिषु भगवतस्तात्त्विकं

रूपामित्याकारकवाक्यस्याऽदर्शनात् । 'अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यत्र सर्वमतेऽपि वर्तमानक्षणे तद्रूपदर्शनस्याऽस्माकं वा भवतां वाऽभावेन दृशिधातोर्लक्षणया शास्त्रजन्यज्ञानपरतया व्यावहारिकस्याऽपि हिरण्यश्मश्रुत्वादेः शास्त्रजन्यज्ञानविषयत्वाविरोधात् ।

यत्तु निर्विशेषे ब्रह्मण्येव हिरण्यश्मश्रुत्वादीनामध्याससम्भवेन सविशेषब्रह्मणः साधकानुग्रहार्थमैच्छिकरूपकल्पनमयुक्तमिति,

तन्न,

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद !
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि—'

इत्युदाहृतप्रसिद्धमोक्षधर्मवचनरीत्या मायापरिणामरूपस्य

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !—'

इत्यादिगीतावचनैरैच्छिकत्वेन निरूपितस्य शरीरस्य मायोपाधिरहितनिर्विशेषे ब्रह्मण्यध्यसनायोगेन सगुणमायोपहितब्रह्मण्येव तस्याऽवश्यवाच्यत्वात्, न ह्यौचित्यं विनाऽध्यासः सम्भवति, अन्यथा शुक्ताविव पाषाणेऽपि रजताध्यासप्रसङ्गात्, मायोपहिते ब्रह्मणि अध्यासं विनैव शरीरवत्त्वलक्षणरूपसम्भवे निर्विशेषे रूपवत्त्वाध्यासकल्पनानुपपत्तेश्च ।

यत्तु 'बृहन्तोऽस्य धर्माः' इति श्रुत्या 'ब्रह्मेशानादिभिः—' इति स्मृत्या ब्रह्म परमार्थधर्मवत्, स्वसमानसत्ताकधर्मवद्वा, पदार्थत्वादित्यनुमानेन च सविशेषमेव ब्रह्म, न निर्विशेषमिति,

तन्न, भवदुक्तश्रुतिस्मृत्योः श्रुतिस्मृतिकोशेष्वदर्शनात् । व्यावहारिकसगुणब्रह्मविषयत्वेन तयोर्निर्विशेषब्रह्म नाऽस्तीत्यदर्शनेन च निर्विशेषब्रह्मनिराकरणासम्भवाच्च । अनुमानस्य 'केवलो निर्गुणः,' 'नाऽत्र काचन भिदाऽस्ति,' 'मृत्योः स मृत्यु-

माप्नोति य इह नानेव पश्यति,' 'एकधैवाऽनुद्रष्टव्यं' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति,' 'तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा' 'द्वैतिनोऽतथ्यदर्शिनः,' 'अरूपवदेव हि तत्प्रधानत्वात्'इत्यादिश्रुतिभागवतविष्णुपुराणब्रह्मसूत्रविरोधेन नरकपालशुचित्वानुमानवदागमबाधिततया परमार्थधर्मासाधकत्वात् ।

यत्तु श्रुतिमात्रस्य श्रुत्या निषेधे 'अग्नीषोमीयं–'इत्युक्तार्हिंसाया 'न हिंस्यात्'इत्यनेन निषेधापत्तिरिति,

तन्न, गुणनिषेधश्रुतेः पारमार्थिकब्रह्मविषयत्वेन गुणबोधकश्रुतेर्व्यावहारिकमायोपाधिकब्रह्मविषयत्वेन गुणतन्निषेधशास्त्रयोर्हिंसातन्निषेधशास्त्रयोरिवैकविषयत्वाभावेन हिंसाविधितन्निषेधन्यायस्य प्रकृत आपादनायोगात् । ब्रह्मणो द्वैविध्यं च

'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चाऽमूर्तमेव च ।

क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते ॥

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।

एतत्तु यत् संव्यवहारभूतं तत्राऽपि चोक्तं भुवनाश्रितं ते'–

इत्यादिविष्णुपुराणवचनैः पौराणिकैरप्यङ्गीकृतम् ।

'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः–'इति कठवल्लीश्रुतिः सर्वसंहर्तृसगुणब्रह्मणस्तदधिष्ठानभूतनिर्विशेषब्रह्मणो 'यत्र तत्र'इति शब्दोक्तस्य तदीयदुर्विज्ञेयत्वस्य च प्रतिपादिका सती ब्रह्मणो व्यावहारिकपारमार्थिकद्वैविध्ये मानमित्यवगन्तव्यम् ।

यत्तु श्रुत्योर्विरोध एकस्यास्तात्त्विकविषयत्वमपरस्या व्यावहारिकविषयत्वमिति कल्पनमयुक्तम्,

'को हि मीमांसको ब्रूयाद्विरोधे शास्त्रयोर्मिथः ।

एकं प्रमाणमितरत् त्वप्रमाणमिति स्थितिः—' इति,

तन्न, वेदोपबृंहणमूर्धन्यतया भवदभिमतश्रीविष्णुपुराणगतेन 'सद्भाव एवं भवतो मयोक्तः—' इत्यनुपदोक्तश्लोकेन विरुद्धार्थकभवदभिमतश्रुत्योर्व्यावहारिकपारमार्थिकविषयतया व्यवस्थाकथनेन 'को हि मीमांसकः—' इति भवदुक्तेर्भवदभिमतपुराणवचनविरुद्धत्वात्, 'सत्यस्य सत्यं प्राणा वै सत्यं तेषामेषः—' इत्यादिव्यावहारिकपारमार्थिकसत्यद्वयबोधकसर्वाभिमतप्रमाणभावश्रुतिविरुद्धत्वाच्च ।

यत्तु 'हिरण्मयः पुरुषो दृश्यते' इति रूपस्य वर्तमानत्वनिर्देशादनारोपितत्वमिति,

तन्न, लडर्थवर्तमानत्वस्य धात्वर्थान्वयित्वेन हिरण्यश्मश्रुत्वादिना रूपेणाऽन्वयित्वायोगात्, अन्वयित्वेऽपि वा तद्रूपस्य व्यावहारिकत्वेन 'घटो दृश्यते' इत्यत्र घटस्येव वर्तमानत्वान्वयित्वोपपत्तेः । आरोपितत्वं हि अधिष्ठानतत्त्वसाक्षात्कारजध्वंसप्रतियोगित्वयोग्याज्ञानतत्प्रयुक्तान्यतरत्वम् । तच्च न वर्तमानत्वेन विरुध्यते ।

यत्तु—'आद्यसूत्रे धर्मशब्दात् द्वितीये भेदशब्दतः ।
निर्धर्मकत्वमैक्यं च निरस्तं परवस्तुनः ॥
धर्मो भेदश्च मिथ्याचेच्छ्रुतिसूत्राप्रमाणता ।
व्याख्याव्याजेन चोक्ता स्यात् त्वया सौगतसौहृदा ॥' इति,

तन्न, श्रीगौडब्रह्मानन्दस्वामिभिर्लघुचन्द्रिकायां मिथ्यात्वविचारे 'ब्रह्माभिन्नत्वावच्छेदेन विनाशित्वरूपमिथ्यात्वपर्यवसितविनाशयद्वृत्तिधर्मवत्त्वमत्र साध्यते—' इत्यादिनाऽनित्यत्वस्य मिथ्यात्वरूपत्वोक्त्या त्वदीयैर्मदीयैः सर्वैरप्यनित्यत्वबोधकवाक्यस्याऽप्रामाण्यानङ्गीकारात्, संसारावस्थायां जीवेश्वरयो-

भेदस्यौपाधिकस्याऽद्वैतिभिरङ्गीकारात मुक्तिदशायामपि मुक्तस्य निर्विशेषचिदैक्येऽप्येतदधिकरणप्रतिपादितसगुणेश्वराद्भेदाङ्गीकारादापेक्षिकमोक्षदशायां जीवेश्वरयोर्भेदस्याऽङ्गीकृतत्वात् यादृशेन ब्रह्मणा सगुणेन जीवस्य भेदो भवद्भिः स्वीकृतस्तादृशेन ब्रह्मणा ब्रह्ममुक्तोभयावस्थस्याऽपि जीवस्य भेदस्वीकारात । एतावांस्तु विशेषः—भवद्भिस्तु स भेदो व्यावहारिक इति नोच्यते, अद्वैतिभिस्तु व्यावहारिक इत्युच्यते, तस्मात् 'अन्तस्तद्धर्मोपदेशात,' 'भेदव्यपदेशाच्चाऽन्यः' इति सूत्रद्वयस्य तद्विषयश्रुतेश्चाऽनित्यव्यावहारिकशरीरभेदविषयत्वाङ्गीकारिणं प्रति सौगतसौहृदत्वकथनस्य स्वपरसिद्धान्ताज्ञानविजृम्भितत्वमेव । प्रत्युत मध्वमते ब्रह्मणि जीवभेदस्य निरूपयितुमशक्यत्वात तन्मतप्रविष्टा एव प्रच्छन्नसौगता इति वक्तुं शक्यम् । तथा हि किं ब्रह्मणि मध्वमते जडजीवभेदो ब्रह्मणः पृथग्भूतो धर्मः, उत ब्रह्मात्यन्ताभिन्नतया ब्रह्मस्वरूपः ? नाऽऽद्यः, मध्वाभिमत—'एवं धर्मान् पृथक् पश्यन्—' इतिश्रुत्यर्थविरोधप्रसङ्गात । न द्वितीयः, सप्रतियोगिकस्य भेदस्य निष्प्रतियोगिकब्रह्मरूपत्वाभावात, भवद्भिरेव मिथ्यात्वघटकाभावस्याऽधिष्ठानब्रह्मरूपत्ववादिनं प्रति निष्प्रतियोगिकस्य ब्रह्मणः सप्रतियोगिकाभावरूपत्वासम्भवस्य न्यायामृतग्रन्थ उक्तत्वात् । न च ब्रह्मण एव ब्रह्मत्वभेदत्वाभ्यामौपाधिकभेदं स्वीकृत्य निष्प्रतियोगिकत्वसप्रतियोगिकत्वोपपत्तिः सम्पादयितुं शक्या, मध्वमते 'एवं धर्मान्—' इतिश्रुत्यर्थरीत्या ब्रह्मत्वभेदत्वयोरपि ब्रह्मात्यन्ताभिन्नत्वावश्यकतयौपाधिकभेदोपपादकब्रह्मत्वभेदत्वाख्यपरस्परभिन्नधर्मद्वयस्यैव शशशृङ्गायमाणत्वात् । विशेषबलात सर्वानुपपत्तिपरिहारस्तु विशेषरूपधर्मस्य ब्रह्मभेदाभेदविकल्पाभ्यां पूर्वमेव परास्तः । तस्मान्मध्वमते जडजीव-

भेदस्य ब्रह्मण्यसिद्ध्या ब्रह्मणो जडजविश्वरूपत्वापत्त्या सर्वसङ्करप्रसङ्गेन सौगतमतप्रवेशः सम्पादितः स्वेनैवेत्यलम् ।

माध्वास्तु–

तैत्तिरीयाः समामनन्ति 'अन्तःप्रविष्टं कर्तारमेतं' 'मन्तश्चन्द्रमसि मनसा चरन्तम्', 'सहैव सन्तं न विजानन्ति देवा' 'इन्द्रस्याऽऽत्मानं शतधा चरन्तम्–'इत्यादि । तत्र यथाऽऽनन्दमयो विष्णुः ब्रह्मश्रुतेः, तथाऽन्तःप्रविष्टः इन्द्रमात्रिप्राद्यन्यतमः, 'इन्द्रो राजा जगतो य ईशे,' 'त्वष्टारं रूपाणि विकुर्वन्तं विपश्चितम्,' 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां,' 'दिवमात्मानं सवितारं बृहस्पतिम्'इतीन्द्रादिश्रुतेः । न तु समुद्रशायित्वलिङ्गाद्विष्णुरिति युक्तम्, श्रुतितो लिङ्गस्य दुर्बलत्वात्–इति प्राप्ते–

राद्धान्तः–अन्तःप्रविष्टो विष्णुरेव, 'अन्तः समुद्रे मनसा चरन्तं यस्याऽण्डकोशं शुष्ममाहुः, प्राणमुल्बम्'इति समुद्रशायित्वब्रह्माण्डवीर्यत्वरूपधर्मोपदेशात् । न चेन्द्रादिश्रुतिभिस्तद्बाधः, निरवकाशलिङ्गबलेन सावकाशानां श्रुतीनामेव बाधात् । सावकाशा हि विष्णाविन्द्रादिश्रुतयः, पुरन्दरादिगततत्प्रवृत्तिनिमित्तानामैश्वर्यादीनां भगवदधीनतया 'तदधीनत्वादर्थवत्'इति वक्ष्यमाणन्यायेन तासां तत्र मुख्यत्वादपरिच्छिन्नैश्वर्यादिमति तत्र तासां महायोगस्य, 'इन्द्रं मित्रं वरुणमग्निमाहुः–'इत्यादिश्रुतिबलेन विद्वद्रूढेश्च सत्त्वात् । यदि निरवकाशलिङ्गबलादन्तः प्रविष्टो विष्णुः, तर्हि स्वतःप्रबलश्रुतिवशादिन्द्रादिरूपोऽप्यस्तु, प्रमाणद्वयबलादुभयाभेदः श्रुत्या विवक्षित इति कल्पनौचित्यात्, नैतदपि युक्तम्, 'इन्द्रस्याऽऽत्मा निहितः पञ्च होता,' 'अन्तरादित्ये मनसा चरन्तम्'इत्यादिभेदव्यपदेशेन विष्णोरिन्द्रादन्यत्वस्याऽपि निर्णयादित्याहुः ।

नच, समुद्रशायित्वादिनिरवकाशविष्णुसाधारणधर्मवत् म युञ्जन्ति रथमेकचक्रम्—'इत्याद्युक्तसप्ताश्वत्वादिरूपसूसाधारणधर्मस्याऽत्र दर्शनेनाऽन्तः प्रविष्टस्य सूर्यरूपत्वस्यैव ाध्यत्वात् । न च विनिगमनाविरहः, विष्णोर्लिङ्गमात्रमस्ति, र्यस्य तु सवित्रादिश्रुतिसहकृतं लिङ्गमिति विशेषात् । न चाऽत्र ष्णुलिङ्गस्याऽपि विष्णुवाचक 'यज्ञ'श्रुतिसाहित्यमस्तीति शङ्क्यम्, 'यज्ञ'शब्दस्य 'यज्ञेन दानेन तपसाऽनाशकेन'इत्यादिश्रुतौ लोके च वैदिकक्रियाविशेष एव प्रयोगप्राचुर्येण रूढत्वनिश्चयात्, विष्णौ प्रयोगबाहुल्याभावेन तत्र तस्य रूढ्यसम्भवात् । न च 'यज्ञो वै विष्णुः' इति श्रुत्या विष्णोर्यज्ञशब्दवाच्यत्वमिति शङ्क्यम्, 'यज्ञो वै'इति वैशब्दोपबन्धेन प्रथमश्रुतत्वेन च यज्ञस्योद्देश्यत्वप्रतीत्या यज्ञस्य विधेयविष्णुशब्दवाच्यत्वावगमेऽपि विष्णोर्यज्ञशब्दवाच्यत्वस्य तादृशश्रुत्याऽनवगमात् । अन्यथा पर्वतो वह्निमानित्युक्तौ विधेयवह्निमत्त्वावच्छिन्नस्य पर्वतस्य पर्वतशब्दवाच्यत्वापत्त्या वह्निमतो महानसस्याऽपि पर्वतशब्दवाच्यत्वापत्तेः । न च तर्हि 'यज्ञेन यज्ञमयजन्त देवाः—'इत्यत्र तृतीयान्त 'यज्ञ'पदेन क्रियाविशेषाभिधानवत् द्वितीयान्त 'यज्ञ' पदेन कस्याऽभिधानं भवतीति शङ्क्यम्, यज्ञाराध्यत्वेन यज्ञसम्बन्धाल्लक्षणया द्वितीयान्त 'यज्ञ'पदेन विष्णोरभिधानात्, काचित्कप्रयोगमात्रेण यज्ञशब्दस्य विष्णौ रूढ्यङ्गीकारे गङ्गायां घोष इत्यत्राऽपि काचित्कप्रयोगसत्त्वात् गङ्गाशब्दस्य घोषे रूढ्यापत्तेः । न च विष्णुलिङ्गस्य श्रुतिसाहित्याभावेऽपि बहुत्वात् सूर्यलिङ्गापेक्षया प्राबल्यमिति शङ्क्यम्, सूर्यलिङ्गस्याऽपि सप्ताश्वत्वैकचक्ररथवत्त्वादिरूपवत्त्वेन बहुत्वात्, प्रविष्टश्रुतिसाहित्येन च विष्णुलिङ्गापेक्षया प्रबलत्वावश्यकत्वात् । न च

'अन्तरादित्ये 'मनसा चरन्तम्' इत्यन्तः मात्रष्टस्याऽऽदित्याद्भेद-प्रतीतेर्न सूर्यरूपत्वमिति शङ्क्यम्, 'स भगवः प्रतिष्ठितः स्वे म-हिम्नि—' इत्यादाविवाऽभेदेऽप्याधाराधेयभावोपपत्त्या आधारा-धेयभावस्य भेदैकान्त्याभावात्, तस्य भेदैकान्त्येऽपि मध्वमते 'अन्योऽन्तर आत्मा प्राणमयः,' 'अन्योऽन्तर आत्मा मनोमयः' इत्यादौ साक्षाद्भेदबोधकान्यशब्दसत्त्वेऽप्यन्नमयप्राणमयादीना-मभेदस्वीकारेण आदित्यादित्यान्तःप्रविष्टयोर्भेदगमकशब्दमात्रे-ण अभेदासाद्धिकथनस्याऽनुचितत्वात् । न च एतत्पा-दान्त्याधिकरणन्यायेन सूर्यलिङ्गस्य सूर्यान्तर्यामिविष्णुवृ-त्तित्वं शङ्क्यम्, यत्र प्रकरणोपपदादिभिः प्रबलप्रमाणान्तरैः प्रकरणस्य विष्णुपरत्वं सिद्धम्, तादृशप्रकरणस्थान्यलिङ्गस्य तदन्तर्यामिविष्णुनिष्ठत्वं पादान्त्याधिकरणे भवद्भाष्यादौ स्थापितम्, अत्र प्रकरणस्य विष्णुनिष्ठस्याऽथाऽप्यसिद्ध्या अ-स्मदुक्तप्रमाणैश्च सूर्यनिष्ठत्वस्यैव सिद्ध्या एतत्प्रकरणस्थसूर्य-लिङ्गस्य पादान्त्याधिकरणन्यायविषयत्वासम्भवात् । न च सवित्रादिशब्दानां विद्वद्रूढ्या महायोगेन तदधीनत्वन्यायेन वा विष्णुपरत्वं शङ्क्यम्, तथा सति सवित्रादिपूर्वपक्षस्यैवाऽनु-त्थानापत्तेः, विद्वद्रूढेश्चाऽज्ञरूढ्यपेक्षया प्रबलतया विद्वद्रूढ्या स-वित्रादिशब्दैः विष्णूपस्थितौ दुर्बलाज्ञरूढिनः सवित्रादिशब्दैः सूर्यादेरनुपस्थित्या सूर्यादिपूर्वपक्षस्यैवाऽसङ्गतत्वात् । न च विद्वद्रूढिमाच्छाद्य पूर्वपक्षः कृत इति शङ्क्यम्, तर्हि सिद्धान्त-प्रतिपादकसूत्रे पूर्वपक्षनिरासकतया विद्वद्रूढेरत्र वक्तव्यत्वा-पत्तेः । न च सूत्रे विद्वद्रूढिर्हेतुतया निर्दिष्टा दृश्यते, किं तु 'धर्मोपदेशात्' इति धर्मा एव हेतुतया निर्दिष्टाः प्रतीयन्ते । किं च विद्वद्रूढिरज्ञरूढिरिति रूढिद्वैविध्यकथनमयुक्तम्, प्रमाणादर्श-

नात् । न च 'इन्द्रं मित्रं वरुणमग्निमाहुः'इति निर्देशादिन्द्रादिशब्दानां विष्णौ विद्वद्रूढिसिद्धिरिति शङ्क्यम्, 'तत् त्वमसि,' 'अहं ब्रह्मास्मि'इत्यादिनिर्देशात् ब्रह्मशब्दस्यैव जीवे विद्वद्रूढ्यापत्तेः । भवदभिमतविद्वत्प्रयोगबाहुल्यरूपविद्वद्रूढेः 'तत् त्वमसि'-इति नवकृत्वोऽभ्यस्ते सम्यक् सम्भवात् । न चोक्तवाक्ये सामानाधिकरण्यनिर्देशबलेन जीवशब्दस्य अहं-त्वमादेः ब्रह्मणि विद्वद्रूढिरिति वैपरीत्यं शङ्क्यम्, अस्यास्मिपदबलेन त्वमहं'पदार्थजीवस्यैव विशेष्यत्वप्रतीत्या तदनुसारेण तद्ब्रह्मादिपदानां विशेषणवाचकाना विशेष्याभेदार्थं विशेष्यपरतया नेयत्वेन तद्ब्रह्मादिपदानामेव विद्वद्रूढ्या जीवत्वादेरावश्यकत्वात् । एवं महायोगोऽप्यसिद्ध एव, योगे महत्त्वबोधकप्रमाणस्य कुत्राऽप्यदर्शनात् । तदधीनत्वन्यायोऽपि न शक्तिग्राहकः,

'यदधीनो गुणो यत्र तद्गुणी सोऽभिधीयते-'

इति भवद्भाष्योदाहृतवचनस्याऽनुपलब्धिपराहतत्वात्, शिष्यत्वगुणस्य आचार्यनिरूपितत्वेन आचार्याधीनतया आचार्ये शिष्यशब्दरूढ्यापत्तेः, गुरुः शिष्य इति समानाधिकरणनिर्देशापत्तेश्च ।

यत्तु श्येनादिशब्दानां 'यथा वैश्येनो निपत्याऽदत्ते'इति वाक्यशेषबलात् अन्यत्र रूढानामपि श्येनसदृशयागनामत्ववदिहाऽपीन्द्रादिपदानां 'अन्तः-समुद्रे मनसा चरन्तम्-'इत्यादिवाक्यशेषबलाद्विष्णुनामत्वमिति,

तन्न, 'सप्त युञ्जन्ति रथमेकचक्रम्-'इति वाक्यशेषात् सवितृश्रुतिसहितादिन्द्रादिशब्दानां सूर्यनामत्वस्यैव न्याय्यत्वादित्यलमतिप्रसङ्गेन ।

इति मध्वचन्द्रिकाखण्डने अन्तस्तद्धर्माधिकरणं समाप्तम् ।

सू० आकाशस्तल्लिङ्गात् १ । १ ।

अत्राऽद्वैतिनः—

'आकाश इति होवाच'इति आकाशनिरूढप्रथमानुपसञ्जातविरोध्याकाशपदानुरोधेन बहून्यपि चरमाणि सर्वकारणत्वज्यायस्त्वानन्तत्वादीनि भूताकाशे कथञ्चिन्नेयानीति 'अस्य लोकस्य का गतिः, आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते—'इत्यादिच्छान्दोग्यवाक्ये पूर्वपक्षं प्रापय्य यद्यप्याकाशपदं 'सर्वाणि'इत्यादितः प्रथमम्, तथाऽपि परिहारवाक्यस्थाकाशपदादपि प्रथमानुपसञ्जातविरोध—'अस्य लोकस्य का गतिः—'इतिप्रश्नवाक्यानुसारेण चरमस्योत्तरवाक्यस्थ आकाशपदवतो नेयत्वात् 'अस्य लोकस्य का गतिः'इतिप्रश्नस्य दृश्यमानसर्वप्रपञ्चकारणविषयत्वात् सर्वलोककारणमेव आकाशपदेन प्रतिपत्तव्यम् । न च लोकान्तर्गतो भूताकाशः सर्वलोकगतिर्भवति । किञ्च ब्रह्मेतरस्मिन्नेतुमशक्यसर्वलोककारणत्वादिबह्वनुग्रहार्थमेकमाकाशपदं जघन्यवृत्त्या ब्रह्मपरमेवाऽऽश्रयणीयम्, 'त्यजेदेकं कुलस्याऽर्थे—'इति न्यायात् । न च 'आत्मार्थे पृथिवीं त्यजत्'इति न्यायात् आकाशरूढेर्बलित्वं शङ्क्यम् । यत्रोपक्रमगतरूढशब्दानुसारेणोपसंहारो नेतुमशक्यः, तत्रोपसंहारानुरोधेन 'यजमानः प्रस्तरः इत्यत्रेवोपक्रमगतरूढस्याऽपि नेयत्वात् । तदेतदुक्तमाकाशाधिकरणभाष्ये अग्निरधीतेऽनुवाकमितिवत् उपक्रमगताकाशपदस्यैव जघन्यवृत्त्या, ब्रह्मपरत्वौचित्यादित्यौपसंहारिकं सर्वभूतकारणत्वं न भूताकाशे नेतुं योग्यम्, तस्मात् सोपाधिकं ब्रह्मैवाऽऽकाशपदेनोपास्यत्वेनोपक्षिप्तमिति सिद्धान्त इति प्राहुः ।

यत्तु प्रथमानुसारेण चरमस्य नयने पूर्वाधिकरणेऽपि प्र-

थमहिरण्यश्मश्रुत्वाद्यनुसारेण चरमं सर्वपापोदितत्वं जीव एव नीयतामिति,

तन्न, हिरण्यश्मश्रुत्वादेर्जीवब्रह्मसाधारणतया जीवासाधारणधर्मत्वाभावेनोपक्रमगतेनाऽपि तेन जीव इति निर्णयासम्भवात् सर्वपापोदितत्वस्य ब्रह्मासाधारणधर्मस्य हिण्यश्मश्रुत्वादिबलेन जीवे नयनासम्भवात् ।

यत्तु त्यजेदेकं कुलस्याऽर्थे इति न्यायेन सर्वलोककारणत्वादिबहनुग्रहार्थमाकाशपदस्यैकस्य जघन्यवृत्त्याश्रयणमयुक्तम्, आकाशश्रुतेः प्रधानत्वात् प्रधानानुरोधेनाऽप्रधानानेकलिङ्गबाधस्याऽप्यात्मार्थे पृथिवीं त्यजेदितिन्यायासिद्धत्वादिति,

तन्न, सर्वलोकगतित्वलिङ्गस्य प्रश्नस्थत्वनिमित्तकप्राबल्यसत्त्वेन तस्य नैमित्तिकप्राबल्यस्य स्वाभाविकश्रुतिप्राबल्यापेक्षया नित्यात् प्रबलं नैमित्तिकमिति न्यायेन प्रबलतया सर्वलोकगतिस्वरूपसर्वकारणत्वस्यैव आत्मार्थेतिन्यायघटकात्मस्थानीयत्वात् । अत एव यादृशलिङ्गस्य नैमित्तिकत्वप्रयुक्तप्राबल्यं नास्ति तादृशस्यैव 'श्रुतिलिङ्गवाक्यप्रकरण—'इति सूत्रे पूर्वतन्त्रे श्रुतितो दौर्बल्यमुक्तम् इत्यवधेयम् ।

यत्तु कार्यकारणयोरनन्यत्वेन कारणगतजगत्कारणत्वानन्तत्वादीनां भूताकाशे सम्भवात् आकाशपदं भूताकाशपरमेवाऽस्त्विति,

तन्न, कारणधर्मस्य कार्ये सत्त्वाङ्गीकारे मृद्रूपकारणगतशरावत्वादेः मृत्कार्यघटादावपि प्रसक्त्या मृद्घट इतिवत् शरावो घट इति प्रत्ययापत्तेः'इति पूर्वाधिकरण एवोक्तत्वात् ।

एतेन 'आकाशपदस्य ब्रह्मपरत्वे किं तद्ब्रह्म सविशेषमुत निर्विशेषम् ? नाऽऽद्यः, सविशेषे तस्मिन्ननन्तत्वाद्यसम्भवात् ।

न द्वितीयः, निर्विशेषे ज्यायस्त्वाद्यसम्भवात् । निर्विशेषे ज्याय-स्त्वाद्यारोपस्वीकारे सविशेषनिर्विशेषविद्ययोरधिकारिभेदः, फल-भेदः, विद्याभेदः, पादभेदश्च न स्यादिति मध्वचन्द्रिका-ग्रन्थः परास्तः । भाष्यभामत्योः 'आकाश इति होवाच' इत्याकाशपदस्योपाहितब्रह्मपरत्वोक्त्या सविशेषनिर्विशेषत्वविकल्प-स्यैवाऽनवकाशात् । सविशेषे मायोपहितब्रह्मणि अनन्तशब्दित-विनाशशून्यत्वरूपानन्तत्वस्य द्रव्यत्वव्यापकसंयोगप्रतियोगित्वरू-ज्यायस्त्वस्य च मुख्यतः सम्भवाविरोधात् । धर्माणां सविशेषमा-त्रगतत्वेन निर्विशेषावृत्तितया विद्याभेदफलभेदाधिकारिभेदपाद-भेदानां सम्यगुपपत्तेः ।

**माध्वास्तु—**

आधिदैविकेन्द्रादिनामसमन्वय उक्तः, आधिभौतिकाकाश-नामसमन्वयोऽत्र क्रियते, तत्र भूतेषु आकाशप्राधान्यात् तद्वाचकं नाम सूत्रे इतरोपलक्षकतया उपात्तम्, अनन्तरसङ्गतिस्तु 'कोह्ये-वान्यात्' इत्यत्र लोकचेष्टकत्वमानन्दमयत्वे हेतुरुक्तम्, तच्चेहाऽऽ-काशस्य श्रूयते, स यदि विष्णोरन्यः स्यात्, आनन्दमयोऽपि अन्यः स्यादिति आनन्दमयाधिकरणाक्षेपादाक्षेपिकी । त-त्राऽऽकाशशब्दो रूढ्या भूताकाशे प्रसिद्धः न योगमात्रेण ब्रह्म-णि वर्तितुं शक्यः । यद्यप्यव्याकाशेऽप्यसौ रूढः, तथाऽपि पृथिवी-लोकगतित्वोपपादकतयोक्तकारणत्वस्य 'आकाशाद्वायुः' इत्यादौ भूताकाश एव श्रवणात् स एवाऽत्र ग्रहीतुं युक्तः, नाऽव्यकाश-रूपाकाशः, अतो 'यदेष आकाश आनन्दो न स्यात्' इत्युक्तोऽपि स ~~प्रभु~~ स्यात् । न च वैपरीत्यम्, रूढेर्बलवत्त्वात्, विद्वद्रूढ्याऽ-प्यसिद्धेः—इति प्राप्ते—

परोवरीयस्त्वादिनिरवकाशलिङ्गात् आकाशः परमात्मैव, न

चाऽऽकाशश्रुतिर्निरवकाशा, लक्षणया योगेन वा परमात्मन्यपि वृत्तिसम्भवात्, 'नामानि सर्वाणि यमाविशन्ति'इति सर्वनाम्नां विष्णुपरत्वाच्च । न चाऽमुख्यत्वं दोषः, योगविद्वद्रूढ्योस्तत्रैव सम्भवादिति सिद्धान्त इत्याहुः ।

तन्न, रूढ्यनुग्रहरूपपूर्वपक्षहेतोर्निरवकाशलिङ्गबाध्यत्वरूपसिद्धान्तहेतोश्च भौतिकमात्रविषयत्वे नियामकाभावात् । न चाधिदैविकेन्द्रादिनामसमन्वयानन्तरं बुद्धिस्थत्वादाधिभौतिकनिरूपणमिति युक्तम्, तर्हि तन्न्यायेनैवाऽस्य गतार्थत्वं दुर्वारम्, तत्राऽपि निरवकाशलिङ्गबलादेव भवद्भिः श्रुत्यन्यथाकरणात् । न च पूर्वन्यायातिदेश एवाऽयम्'इति मध्वचन्द्रिकोक्तं युक्तम्, अस्याऽधिकरणस्याऽऽतिदेशिकत्वे 'अत एव प्राणः'इतिवत् 'अत एवाऽऽकाशः'इति वा 'आकाशश्च'इति वा 'तथाऽऽकाशः'इति वा अतिदेशसूत्रनिर्देशापत्तेः । किं चाऽव्यवहितपूर्वाधिकरणेनोत्तराधिकरणस्यानन्तरसङ्गतिर्वक्तव्या, तथैव पूर्वतन्त्रे दर्शनात्, इह तथाऽनुक्त्वा एकान्तरितेनाऽऽनन्दमयाधिकरणेनाऽस्य सङ्गत्युक्तिरयुक्ता । किं च 'नामानि सर्वाणि यमाविशन्ति'इति श्रुत्या सर्वनाम्नां विष्णुपरत्वोक्तिरयुक्ता, तादृशश्रुतेरिदानीं केनाऽप्यनधीतत्वात् । तादृशश्रुतिकोशादर्शनाच्च तस्याः सन्दिग्धश्रुतित्वप्रामाण्यकत्वात् ।

इति मध्वचन्द्रिकाखण्डने आकाशाधिकरणं समाप्तम् ।

**सू० अत एव प्राणः १ । १ ।**

**अत्राऽद्वैतिनः—**

'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता—'इत्युपक्रम्य श्रुते 'कतमा सा देवता ? प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि

प्राणमेवाऽभिसंविशन्ति प्राणमभ्युज्जिहते' इति वाक्ये प्राणशब्दः प्रसिद्धप्राणपरः, तत्र तस्य रूढत्वादिति प्राप्ते–

ब्रह्मपर एवाऽयं, सर्वभूतसंवेशनादिब्रह्मलिङ्गादिति सिद्धान्तः। न चैवं पूर्वेणैतद्गतार्थमिति शङ्क्यम्, 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रम्' इत्यादिश्रुतेः स्वापकाले प्रसिद्धप्राणे सर्वभूतसारेन्द्रियलयाद्युक्तिद्वारा सर्वभूतलयादिपरायाः प्रत्यक्षरूपमानान्तरसंवादित्वेन प्रबलत्वात् ब्रह्मणि भूतलयादिबोधिकाया 'यतो वा'–इत्यादिश्रुतेर्मानान्तरसंवादरहिततया दुर्बलत्वात् प्रस्तावत्वाक्यं प्रसिद्धप्राणपरम्। यद्वा प्रसिद्धस्वापवाक्यानुसारेण प्रस्तावत्वाक्यमपि प्रसिद्धप्राणे इन्द्रियलयादिमात्रपरम्। आकाशवाक्यं तु न मानान्तरानुगृहीतम्, वाय्वादिकारणताया आकाशे मानान्तरेणाऽग्रहणादित्यधिकाशङ्कया अस्याऽधिकरणस्य प्रवृत्तत्वान्न गतार्थत्वाशङ्केत्याहुः।

यत्तु पूर्वपक्षे प्राणस्य जडवायुत्वप्रश्ने 'कतमा सा देवता' इति, प्रतिवचने 'सैषा देवता' इति देवताशब्दस्य चेतनवाचिनो निर्देशायोगः, तदभिमानिचेतनत्वे वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्तमिति अत्रैन भाष्यपूर्वपक्षग्रन्थविरोध इति, तन्न, 'हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इत्यादिश्रुतिषु अचेतने देवताशब्दस्याऽस्यामेवोपनिषदि असकृदुक्तत्वेन न चेतनैकान्तत्वमिति मन्यमानपुरुषरीत्या पञ्चवृत्तिवायुरव प्राणशब्देन ग्राह्य इति मत्वा पूर्वपक्षकरणात्।

यत्तु स्वापकाले प्राणे वायुविकारे भूतलयस्याऽप्रत्यक्षत्वादिन्द्रियाणामतीन्द्रियत्वेन तल्लयस्याऽप्यप्रत्यक्षत्वात् यस्मिन् सव्यापारे सति यान्निर्व्यापारं तत् तत्र लीयते इति व्याप्तेर

व्यभिचरितत्वे स्वापकाले सव्यापारे प्राणे निर्व्यापारमिन्द्रियं तत्र लीयते इति अवगन्तुं शक्यम्, तच्च न सम्भवति, सव्यापारे वायौ निर्व्यापारस्याऽऽकाशस्य लयाऽदर्शनात्, पूर्वेद्युर्येन चक्षुषा दृष्टं तेनैवेदानीं पश्यामीत्यनुभवविरोधेन स्वापकाले इन्द्रियलयोक्त्ययुक्तेश्च, 'यथा सौम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते एवं हैवैतत् सर्वं पर आत्मनि सम्प्रतिष्ठते'—इत्युपक्रम्य 'चक्षुश्च द्रष्टव्यं च' इति सुषुप्तौ चक्षुरादीनामनुपस्थितिश्रवणेन नाशासम्भवाच्च । तस्माद्भूतानामिन्द्रियाणां च स्वापकाले लयस्य प्रत्यक्षादिप्रमाणान्तरसिद्धत्वोक्तिरयुक्तेति,

तन्न, सुप्तोत्थितस्य एतावन्तं कालं किमपि भूतं नाऽदर्शं नाऽश्रौषमिति प्रत्यवमर्शरूपप्रमाणेन सुप्तिकाले भूतादर्शनादेः सिद्धतया तददर्शनस्य निमित्तं वाच्यम्, तत् किं विषयस्य भूतस्य लीनतया तदभाव उत भूतदर्शनजनकस्येन्द्रियस्य लीनतया तदभावो वेति विमर्शे विनिगमकाभावात् भूतेन्द्रियोभयलयस्य च प्राणवृत्तिमात्रप्रधाने स्वापकाले प्रमाणान्तरवेद्यतोक्त्यविरोधात् । यस्मिन् गङ्गाप्रवाहे पूर्वेद्युर्मया स्नानं कृतं तस्मिन्नेवाऽहं स्नास्यामीत्यादौ पूर्वपूर्वप्रवाहविनाशेऽप्युत्तरोत्तरप्रवाहधारानुस्यूतिमात्रेणैक्यव्यपदेशवत् पूर्वपूर्वचक्षुर्विनाशेऽपि तत्तज्जातीयोत्तरोत्तरचक्षुःप्रवाहाभिप्रायेण चक्षुरैक्यव्यपदेशोपपत्त्या चक्षुर्लयोक्त्यविरोधात्, वयसां सञ्चरणकाले सव्यापारपक्षद्वयविशिष्टतावस्था या दृश्यते तादृशावस्थाया वासोवृक्षकोटरावस्थानकाले विनाशवच्चक्षुर्द्रष्टव्यादीनामपि सूक्ष्मरूपेण ब्रह्मण्यवस्थानेऽपि स्थूलावस्थानाशस्य स्वापकालानुभूतस्यैव 'यथा सौम्य वयांसि—' इति श्रुत्युक्ततया तया श्रुत्या चक्षुरादिलयाऽभावाप्रतीतेः ।

यत्तु 'आकाशाद्वायुः' इति श्रुतेरपि मानान्तरानुगृहीतत्वं

वक्तुं शक्यम्, आकाशात् पवनस्य पवनाच्च फूत्कारादूष्मणः स्वेदस्य स्वेदाच्च जलान्मशकादिपार्थिवस्योत्पत्तेः प्रत्यक्षतो दर्शनात् नाऽऽकाशवाक्यात् प्राणवाक्येऽधिकाशङ्का युक्तेति,

तन्न, यथा सञ्चिकाधारितवस्त्रं प्रति सञ्चिकाया आधारत्वमात्रं, न तु वस्त्रं प्रति जनकत्वं, तथा आकाशान्तःस्थितपवनं प्रत्याकाशस्य प्रत्यक्षादिनाऽऽधारत्वमात्रावगमेऽप्याकाशस्य तज्जनकत्वानवगमेनाऽऽकाशवाक्यस्य मानान्तरानुगृहीतत्वासम्भवात् ।

यत्तु उद्गीथप्रतिहारदेवतयोरब्रह्मणोः समभिव्याहारात् प्रस्तावदेवतायाः प्राणस्याऽब्रह्मत्वं युक्तमित्यप्युक्ताऽधिकाशङ्काऽपि न युक्ता, पूर्वाधिकरणेऽपि 'अपां का गतिः असौ लोक इति होवाच'इति अब्रह्मापां गतित्वोक्तिसमभिव्याहारात् 'अस्य लोकस्य का गतिराकाश इति होवाच'इत्यत्राऽप्यब्रह्मण एव आकाशत्वाशङ्कायाः सत्त्वेनाऽस्याऽऽधिकाशङ्कात्वासम्भवादिति,

तन्न, 'अन्तवद्वै किलते दाल्भ्य साम'इत्यादिना अन्तवद्गतिरूपाब्रह्मात्मकलोकानां निन्दापूर्वकं "अस्य लोकस्य का गतिराकाश इति होवाच'इति प्रश्नप्रतिवचनयोः प्रवृत्तत्वेन निन्दिताब्रह्मगतिसान्निधानस्याऽऽकाशवाक्यगताकाशाब्रह्मत्वाप्रयोजकत्वात्, प्रत्युत अन्तवत्त्वशून्यं ब्रह्मैवाकाश इत्यर्थं प्रत्येव प्रयोजकत्वाच्च आकाशप्राणवाक्ययोस्तौल्याभावात् ।

माध्वास्तु—

प्राणशब्दप्रवृत्तिनिमित्तजीवनहेतुत्वस्य वायावन्वयव्यतिरेकौ स्तः, न तु परमात्मनि, आकाशशब्दप्रवृत्तिनिमित्तावकाशहेतुत्वस्य तु नाकाशेऽन्वयव्यतिरेकौ स्तः, परिच्छिन्नस्य तस्याऽभावेऽप्यवकाशदर्शनादित्यधिकाशङ्कायामतिदेशः—'अत एव प्राणः'इति । 'तद्वैत्वं प्राणो भवः महान् भोगः प्रजापतेः'इत्यत्र प्राणशब्दः स्वप्र-

वृत्तिनिमित्तजीवनान्वयव्यतिरेकानुविधायिनि वायावेव युक्तः, न ब्रह्मणि, तस्य सर्वगतस्य व्यतिरेकाभावेनाऽन्वयव्यतिरेकाभावात। न च निरवकाशलिङ्गैर्बाधः, तदर्शनादिति पूर्वपक्षः। 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ'इति निरवकाशलिङ्गेन प्राणो विष्णुरेव, प्राणशब्दस्य महायोगविद्रूढी तु परमात्मनि सम्भवत इति सिद्धान्त इत्याहुः।

तन्न, 'तद्वै त्वं प्राणो भवः'इत्यत्राऽस्मिन् वाक्ये भवदुक्तश्रीलक्ष्मीपतित्वरूपविष्णवसाधारणलिङ्गादर्शनात, पूर्ववाक्ये लक्ष्मीपतित्वलिङ्गसद्भावेऽपि तादृशवाक्ये तु 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ'इत्यस्ति, भवद्भिश्च 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ'इति पूर्ववाक्यं पठितम्, तच्चाऽसङ्गतमेव। तैत्तिरीयशाखायां तथा पाठाभावेऽपि वाजसनेयिशाखायां 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति पाठो दृश्यते इति न शङ्क्यम्, तादृशवाजिशाखावाक्यस्य भवदुदाहृत 'तद्वै त्वं प्राणो भव'इति तैत्तिरीयवाक्यस्थप्राणशब्दनिर्णायकत्वासम्भवादिति।

इति मध्वचन्द्रिकाखण्डने अत एव प्राणाधिकरणं समाप्तम्।

सू० ज्योतिश्चरणाभिधानात।

अत्राऽद्वैतिनः—

"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु'इति वाक्ये ज्योतिः पदं भूतज्योतिःपरमेव, तत्र तस्य रूढत्वात, पूर्वाधिकरणवत् स्ववाक्ये ब्रह्मलिङ्गादर्शनाच्चेति पूर्वपक्षः।

ज्योतिर्ब्रह्मैव, 'अथ यदतः परो दिवो ज्योतिः' इति ज्योतिःपदसमानाधिकरणतया ज्योतिःपदापेक्षया पूर्वतया श्रुतेन यदिति सर्वनाम्ना पूर्वग्रन्थोपस्थितपरामर्शित्वभावेन 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः, पादोऽस्य सर्वा भूतानि, त्रिपादस्यामृतं दिवि' इतिपूर्ववाक्यप्रतिपादितत्रिपाद्ब्रह्मणोऽभिधानात्, तादृशयत्पदसमानाधिकृतज्योतिःपदस्य त्रिपाद्ब्रह्माभिधायकत्वावश्यकत्वात्—इति सिद्धान्त इत्याहुः।

यत्तु सूत्रस्थचरणशब्देन मन्त्रस्थत्रिपात्पदार्थग्रहणवत् 'सैषा चतुष्पदा षड्विधा गायत्री' इति ब्राह्मणवाक्यस्थचतुष्पाच्छब्दितभूतपृथिव्यादीनामपि ग्रहणसम्भवेन तद्ग्रहणार्थं 'भूतादिपादव्यपदेशोपपत्तेः' इति सूत्रान्तरं व्यर्थमिति,

तन्न, ब्रह्मपरज्योतिःशब्दसमानाधिकरणयदितिसर्वनामपदपरामर्शयोग्यस्यैव त्रिपाद्ब्रह्मणश्चरणशब्देन ग्रहीतव्यतया भूतपृथिव्यादीनां बहूनामुक्तैकवचनान्तयदितिसर्वनामशब्दग्रहणायोग्यतया च चरणशब्देन सौत्रेण तद्ग्रहणायोगात् तद्ग्रहणार्थं 'भूतादिपाद' इति पृथक्सूत्रस्याऽऽवश्यकत्वादिति।

अत्र माध्वाः—

'ज्योतिश्चरणाभिधानात्—' इत्यादिचतुःसूत्र्या ऐकाधिकरण्यमङ्गीकृत्य 'विमे कर्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत्' इति, 'अथ यदतः परो दिवः' इत्यग्निसूक्तच्छान्दोग्यवाक्यद्वयं विषयं कृत्वा पूर्वपक्षसिद्धान्तौ वक्तव्याविति ज्योतिःसूत्रस्याऽग्निसूक्तस्थं वाक्यं विषयं कृत्वा पूर्वपक्षसिद्धान्तौ वक्तव्यौ त्रिसूत्र्याः च्छान्दोग्यवाक्यं विषयं कृत्वा पूर्वपक्षसिद्धान्तौ वक्तव्याविति पक्षद्वयं गुहानिहितत्वस्याऽन्यनिष्ठत्वशङ्कया आनन्दमयाधिकरणाक्षेपेण आक्षे-

पिकी सङ्गतिः अग्निसूक्तस्थज्योतिराग्नेरेव ज्योतिःशब्दस्य तत्र रूढत्वात् अग्निसूक्तस्थत्वाच्चेति प्राप्ते—

अग्निसूक्तस्थं ज्योतिः विष्णुरेव, तादृशज्योतिषः कर्णादिविचारणाभिधानात् कर्णादिविदूरत्वादिति सिद्धान्तं चाहुः।

तन्न, सङ्गतिस्तावदयुक्ता अत्राग्निसूक्ते ज्योतिषो हृदयाहितत्वमुक्तम्, आनन्दमयस्य च गुहाहितत्वमुक्तम्, तयोश्च भेदात् हृदयाहितत्वेन गुहाहितत्वस्याऽप्रत्यभिज्ञानात् छान्दोग्यवाक्ये सुतरां तदभावाच्च, 'यदिदमन्तः पुरुषे ज्योतिः' इति जाठरज्योतिरैक्योपदेशेन तदभावस्यैव ज्ञापनाच्च, 'योऽयमन्तर्हृदय' इति गायत्र्यां श्रवणेऽपि पूर्वपक्षे गायत्रीज्योतिषो भिन्नत्वेन ज्योतिर्द्वारा तदाक्षेपायोगाच्च। आनन्दमयाधिकरणस्याऽत्यन्तव्यवहितत्वेन तेनाऽस्य सङ्गतिकथनस्याऽनुपयुक्तत्वाच्च। ऐकाधिकरण्येनाऽग्निसूक्तस्थवाक्योदाहरणमप्ययुक्तम् तत्र छन्दोभिधानभूतादिपादव्यपदेशोपदेशभेदानामसत्त्वेन छन्दोऽभिधानात् इत्यादिसूत्राणामप्रवृत्तेः। न चाऽग्निसूक्तस्थज्योतिषः छान्दोग्यस्थज्योतिषश्च श्रुत्या शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञायमानत्वेनैक्यात् सर्वं सम्भवतीति वाच्यम्। दिवःपरविश्वोत्तीर्णपदेशवृत्तित्वेन श्रुतस्य छान्दोग्योक्तज्योतिषः हृदयाहितत्वेन श्रुताग्निसूक्तस्थज्योतिषा ऐक्यासम्भवात्। आग्निसूक्ते कर्णादिविदूरत्वश्रवणेन च्छान्दोग्ये तद्विरुद्धस्य 'तदेतदृष्टं च श्रुतं च' इति कर्णादिगोचरत्वेन श्रुतस्य भेदावश्यम्भावेन मासाग्निहोत्रनैयमिकाग्निहोत्रयोरिव ज्योतिषोर्नामैक्यस्य प्रत्यैक्याप्रयोजकत्वाच्च। न चाऽऽकारभेदेन कर्णादिविदूरत्वतद्गोचरत्वोपपत्तिरिति वाच्यम्। निश्चिते ज्योतिषोरैक्ये आकारभेदनिश्चयः, आकारभेदे च निश्चितेऽनैक्यनिश्चय इत्यन्योन्याश्रयात्। न च तेजो वै ब्रह्म

वर्चसम्'इति गायत्र्यां तेजोरूपताश्रवणात् तेजःशब्दाग्निशब्दयोरनतिभिन्नार्थतया अग्नौ गायत्रीपदस्य गायत्र्यामग्निपदस्य प्रयोगो न विरुद्ध इतिद्वयोरेकार्थतेति शङ्क्यम् । ब्रह्मवर्चसलक्षणतेजोहेतौ गायत्र्यां तेजःशब्दस्य'आयुर्घृतम्'इतिवद्गौणव्यपदेशेऽपि तस्य तेजसोऽग्निरूपत्वाभावात्, अन्यथा 'यजमानः प्रस्तरः'इति निर्देशात् 'सूक्तवाकेन प्रस्तरं प्रहराति'इत्युक्तप्रहरणं यजमानस्य स्यात् । ऐकाधिकरण्ये च्छान्दोग्यवाक्योदाहरणमप्ययुक्तम् । तत्र विचारणाभिधानरूपहेत्वभावात् छान्दोग्योक्तज्योतिषः अग्निसूक्तस्थज्योतिषश्चाऽनुपदमेवैक्यस्य निराकृतत्वात् । किं च सूत्रे चरणशब्दस्य विचारणार्थत्ववत् ब्राह्मणार्थत्ववत् क्लिष्टमिति ।

इति मध्वचन्द्रिकाखण्डने ज्योतिश्चरणाभिधानाधिकरणं समाप्तम् ।

सू० प्राणस्तथानुगमात् ।

अत्राऽद्वैतिनः—

प्रतर्दनं प्रति इन्द्रेण प्रयुक्तं 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्व'इत्यादि वाक्यं श्रूयते तत्र 'मामेव विजानीहि'इतीन्द्रलिङ्गात् 'इदं शरीरं परिगृह्योत्थापयति'इतिवायुलिङ्गात् 'वक्तारं विद्यात्'इति जीवलिङ्गादिन्द्रादिरेव प्राण इति प्राप्ते 'यं त्वं मनुष्याय हिततमं मन्यसे'इत्युपक्रमे हिततमत्वरूपब्रह्मलिङ्गानुगमात् प्राणो ब्रह्मैव, जीवमुख्यप्राणलिङ्गं तु 'प्राणोऽस्मि प्रज्ञात्मा''प्राण एव प्रज्ञात्माऽनन्तोऽजर'इत्युपक्रमोपसंहारैकार्थ्यावगमेन उपांशुयाजाधिकरणन्यायेन कृत्स्नस्यैकवाक्यतया ब्रह्मरूपैकार्थपरत्वे निश्चिते सार्वात्म्याभिप्रायेण ब्रह्मणि योज्यमिति प्राहुः ।

यत्तु अद्वैतिभिः प्राणशब्दस्य ब्रह्मपरत्वसाधकतयोक्तं हि-

ततमत्वं परमपुरुषार्थसाधनत्वम् परमपुरुषार्थत्वं वा। नाद्यः ब्रह्मज्ञानस्य परमपुरुषार्थसाधनत्वेऽपि ब्रह्मणि तदभावात् । न द्वितीयः त्वन्मते निर्विशेषस्य हिततमत्वं वाच्यम् तस्यैव मोक्षदशानुस्यूतत्वात्, तस्य हिततमत्वं न विशिष्टं जीवं प्रति तस्य मोक्षदशायामभावात् । नाऽपि शुद्धं प्रति तस्याऽखण्डत्वेन तस्येदमितिविभागायोगादिति ।

तन्न, त्रैवर्णिकं प्रति सोमयागसाध्यस्वर्गस्य भोग्यत्वेऽपि स्वर्गभोगदशायां त्रैवर्णिकत्वाभावेऽपि विशेष्यांशमादाय स्वर्गस्य त्रैवर्णिकनिरूपितभोग्यत्ववदन्तःकरणविशिष्टचैतन्यस्य मोक्षदशायां विशेषणाभावेऽपि चैतन्यरूपविशेष्यांशस्य सत्त्वे तमादाय विशिष्टचैतन्यनिरूपिताहिततमत्वस्य शुद्धे सम्भवाविरोधात् यज्ज्ञानान्मोक्षः तत्त्वं हिततमपुरुषार्थत्वमित्युक्तौ, भवत्कल्पितविकल्पदोषस्यानवकाशाच्च ।

यत्तु 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति सूत्रस्य जीवमुख्यप्राणादिलिङ्गानुग्रहार्थं किञ्चित् जीववाक्यं किञ्चित् ब्रह्मवाक्यं किञ्चित् प्राणवाक्यमित्यङ्गीकर्तव्यतया न सर्वं ब्रह्मवाक्यमिति चेन्न, उपासात्रैविध्यप्रसङ्गात् अन्यत्र 'प्राणस्य प्राण'मित्यत्र ब्रह्मलिङ्गैः प्राणशब्दस्य ब्रह्मपरताया आश्रितत्वात् इहापि हिततमत्वादिब्रह्मलिङ्गयोगादित्यर्थ इति व्याख्यानमयुक्तम् 'अपीतौ तद्वत् प्रसङ्गात्' इतिवदत्र प्रसङ्गपदाभावात्, त्रैविध्यादित्यनेन त्रैविध्यस्यैव स्वरसतः प्रतीतेश्च, आश्रितत्वादित्यत्र प्रकृतत्रैविध्यस्यैवान्वयसम्भवे ब्रह्मपरताया इत्यध्याहारो न युक्तः, तद्योगादिति च सर्वनाम्नः सन्निकृष्टत्रैविध्यपरत्वसम्भवे विप्रकृष्टब्रह्मलिङ्गपरत्वमयुक्तम् तद्योगादित्यस्यानुगमादित्यनेन पुनरुक्तिश्चेति ।

तत्र, उपासात्रैविध्यादित्यस्य 'प्राणोऽस्मि प्रज्ञात्मा' इत्यादिविषयवाक्यकस्योपासनस्य त्रित्वादिसर्थपरत्वे 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्व' इत्युपक्रमस्थप्राण एव प्रज्ञात्मेत्युपसंहारैकरूप्यावगतैकार्थविषयत्वावगमितैकवाक्यतापन्नानां तन्मध्यगतजीवप्राणलिङ्गवाक्यानां प्रत्येकं प्रत्येक तत्तदुपासनाविधानेन उपासनात्रयपरत्वे वाक्यभेदापत्तेरेकवाक्यत्वनिर्वाहार्थं त्रैविध्यादित्यस्य त्रैविध्यप्रसङ्गादित्यर्थकत्वस्याकामेनापि स्वीकर्तव्यत्वात् अन्यथा उपक्रमोपसंहारावगमितैकवाक्यस्थलेऽपि मध्ये विधानभेदाङ्गीकारे उपांशुयाजाधिकरणविरोधापत्तेः। आश्रितत्वादित्यत्र प्रकृतत्रैविध्यस्यैवान्वयसम्भव इत्यसत्, त्रैविध्यप्रसङ्गादित्यर्थतायाः प्रमाधितत्वेन त्रैविध्यस्यैवाप्रकृतत्वात्। अत एव तद्योगादिति सर्वनाम्नः संनिकृष्टत्रैविध्यपरत्वसम्भव इत्यप्यसदेव पर्वतो वन्हिमान् धूमादितिप्रतिज्ञादिसिद्धस्य तस्माद्वह्निमानिति निगमनेऽप्यपौनरुक्त्यवदनुगमादित्युक्तस्य तद्योगादिति निगमनेऽप्यपौनरुक्त्यात।

माध्वास्तु—

'तावा एताः शीर्षण्यः श्रियः चक्षुः श्रोत्रं मनो वाक् प्राणः' इत्यत्र प्राणो विष्णोरन्यः इन्द्रियैः सह पाठात् अतः प्रागुक्तप्राण-आनन्दमयोऽप्यन्य एवेति प्राप्ते

प्राणोऽयं विष्णुरेव तं देवाः प्राणयन्त सएषोऽसुः स एव प्राणः स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा उपासाञ्चक्रिरे' इति प्राणस्य देवोपास्यत्वमुच्यते एवं 'अथ देहरथः' इत्यादिना शरीररथप्रत्यादिगुणा आम्नायन्ते, अतो विष्णुलिङ्गानां बाहुल्यात्—

'विष्णुमेवानयन् देवा विष्णुं भूतिमुपासते।

स एव सर्ववेदोक्तस्तद्रथो देह उच्यते'

इतिपुराणवचनेन स्वभावबलवत्त्वरूपानिरवकाशत्वाच्च एकं लिङ्गमन्यथा नेयमित्याहुः ।

तन्न, अनुगमादिति सौत्रहेतोर्बाह्निरुपनिरवकाशत्वरूपार्थे स्वरसतो वृत्त्यभावादावृत्तेरभ्यासादिति वा वक्तव्येऽनुगमादित्युक्तेरसाङ्गत्यापाताच्च । न च 'तद्वै त्वं प्राण'इत्यत्र श्रुतानामत्राप्यनुगमादिति हेत्वर्थ इति वाच्यम् । तदधिकरणे प्रधानहेतुत्वेनोक्तस्य लक्ष्मीपतित्वस्यात्राश्रवणेन तदनुगमासम्भवात् अनुगमादित्यस्यैव तत्रत्यहेत्वनुगमार्थत्वे तथाशब्दवैयर्थ्यापाताच्च । 'विष्णुमेवानयन् देवा' इत्युदाहरणमयुक्तम् तद्वाक्यस्येदानीमुपलभ्यमानकोशेषु क्वाप्यनुपलम्भात् ।

इति मध्वचन्द्रिकाखण्डने प्रतर्दनाधिकरणं समाप्तम् ।

इदं तु बोध्यम् माध्वमते ब्रह्मण इव ज्ञानानन्दादिगुणैर्जीवस्यात्यन्ताभेदस्वीकारान्मुक्तिदशायां ज्ञानानन्दादिगुणानां मुक्तस्य चाश्रयाश्रयिभावानुपपत्त्या ब्रह्मवन्मुक्तोऽपि निर्गुणः स्यात् । न च मुक्तस्य तद्गुणानां चाश्रयाश्रयिभावाभावेऽपि विशेषबलादाश्रयाश्रयिव्यवहारोपपत्तेः मुक्तस्य सगुणत्वमिति वाच्यम् । धर्मरूपस्य भवत्कल्पितविशेषस्य 'एवं धर्मान्'इति श्रुत्या जीवात् पृथक्त्वासिद्ध्या जीवाभिन्नतया जीवस्वरूपवदेवाश्रयाश्रयिभावव्यवहाराप्रयोजकत्वात् । न च 'एवं धर्मान्' इति श्रुतिर्ब्रह्मविषया अतो जीवकल्पितस्य विशेषस्य जीवात् भिन्नत्वे बाधकाभावादुक्तव्यवहारोपपत्तिरिति वाच्यम् । तर्हि 'एवं धर्मान्'इति श्रुतिविरोधाभावेनानन्दादिगुणानां जीवस्य चात्यन्ताभेदे प्रमाणाभावात् तत्रात्यन्ताभेदस्वीकारानुपपत्तिः ।

किं च तन्मते आनन्दानुभवितृत्वानुपपत्तिः आनन्दानुभवरूपधर्मं प्रति मुक्तस्याश्रयत्वाभावात् । मध्वमते आनन्दानुभ-

भवस्य मुक्तरूपत्वस्वीकारात् । न च वृत्तिज्ञानस्य जीवाद् भिन्नतया तस्य मोक्षदशायामानन्दानुभवरूपत्वं स्वीकृत्य तदाश्रयत्वरूपानन्दानुभवितृत्वमुपपादनीयमिति वाच्यम् । वृत्तिज्ञानस्य मनःपरिणामत्वेन मुक्तौ मनोनाशेन वृत्तिज्ञानासम्भवस्य भवद्भिरेवोक्तत्वात् । प्रमातृस्वरूपज्ञानस्यैव भवद्भिस्तदङ्गीकारात् ।

किं च माध्वमते मुक्तानां तारतम्योक्तिरप्ययुक्ता, किं तत्तारतम्यं ? प्रस्थमितव्रीह्याढकपरिमितव्रीह्योरिव सङ्ख्यातारतम्यकृतम्, उत शौर्यपराक्रमगुणद्वययुक्तदेवदत्तशौर्यपराक्रमगाम्भीर्यादिगुणयुक्तविष्णुमित्रयोरिव गुणतारतम्यकृतम् ? आहो स्वित् कपालघटयोरिव परिमाणतारतम्यकृतम् ? अथ वा घटपटयोरिव स्वरूपकृतम् ! नाद्यः मुक्तानां प्रत्येकमेकत्वसङ्ख्याश्रयत्वात् । न-द्वितीयः मुक्तानां भवद्रीत्याऽऽनन्दादिगुणास्यन्ताभिन्नतया निर्गुणत्वात् । न तृतीयः मुक्तानां प्रत्येकमणुत्वेन परिणामतारतम्याभावात् । न चतुर्थः तस्य परस्परभेदरूपत्वेन तस्मिन् तारतम्यव्यवहारासिद्धेः सर्वैरपि मुक्तानां परस्परभेदस्य स्वीकृतत्वेन तत्साधनवैफल्याच्च ।

यत्तु इक्षुक्षीरगुडादिरसानां मधुरमधुरतरमधुरतमानामिव मुक्तजीवस्वरूपाणां तारतम्यमिति,

तन्न, उक्तरसानां मध्ये यस्य क्षीरप्रियस्य क्षीररसे मधुरतमत्वबुद्धिः तत्र त्वन्यस्य मधुरत्वबुद्धिरित्याद्यनुभवसिद्धम् । तथा च तेषु मधुरत्वमधुरतरत्वमधुरतमत्वानामनियततया स्वरूपतारतम्यनिनियमाभावेन तद्दृष्टान्तबलेन मुक्तानन्दनियमस्य वक्तुमशक्यत्वात् ।

किं च माध्वमते 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः ।

स एको मनुष्यगन्धर्वाणामानन्दः' इत्यादिश्रुतौ 'श्रोत्रियस्य चाकामहतस्य' इति प्रतिपर्यायमकामहतशब्देन तत्तन्मुक्तं गृहीत्वाऽऽनन्दतारतम्यं बोध्यत इत्येतदप्यनुपपन्नम्, एकमेव मुक्तं तत्तत्पर्यायगताकामहतशब्देनाऽनूद्य तस्य तत्तत्पर्यायोक्तानां मनुष्यादारभ्य हिरण्यगर्भपर्यन्तमुक्तानन्दानां बोधनेन मुक्तभेदेनानन्दभेदस्य तच्छ्रुत्या स्वरसतः प्रतीत्यभावात् ।

वस्तुतस्तु नेयं श्रुतिः मुक्तविषया, तस्मिन् बद्धजीवत्वव्याप्यश्रोत्रियत्वधर्मादिभावात् शतगुणितप्रकृतानन्दस्य तत्तदकामहतश्रोत्रियेऽसम्भवात् अकामहतत्वं विशेषणं जडस्य घटादेरेव स्वतोऽकामहतत्वात् तत्रानन्दापसत्त्या श्रोत्रियत्वविशेषणम्, अकामहतत्वसमुच्चितं श्रोत्रियत्वमेवोक्तशतगुणानन्दस्य प्रयोजकमिति सिद्ध्यर्थं श्रोत्रियत्वाकामहतत्वयोः समुच्चायकश्चकारः ।

किं च यदपि 'अक्षिण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः' इतिश्रुतौ मनोजवशब्दितमोक्षहेतुब्रह्मोपासनानातारतम्यकथनेन तत्साध्यमुक्तावपि तारतम्यमस्तीति प्रतीयत इति,

तदपि न, मनोजवशब्दस्य मनोवेगपरत्वेन मोक्षहेतुब्रह्मोपासनपरत्वस्य विना कारणमभ्युपगन्तुमशक्यत्वात् ।

किं च माध्वमते मुक्तेश्वरावुभावप्यन्योन्यं निर्गुणत्वेन दर्शनरहितत्वात् । उभावपि समौ न्यूनाधिकभावसमर्पकगुणराहित्यात् । न चेश्वरस्य महत्त्वं मुक्तस्याणुत्वमित्यसाम्यमिति वाच्यम् । तन्मते महत्त्वस्यापि ब्रह्मात्यन्ताभिन्नतया ब्रह्मरूपत्वात् अणुत्वस्यापि च मुक्ताभिन्नतया तद्रूपत्वात् महत्त्वाणुत्वयोरेव तयोरभावात् साम्यापत्तेरनिवार्यत्वात् ।

किंच जगत्स्रष्टृत्वं गुणः ब्रह्मात्यन्ताभिन्न इति ते स्वीकृतः स चाऽनुपपन्नः 'तत् तेजोऽसृजत' इति स्रष्टृत्वस्यागन्तुकत्वोक्त्या

नित्यसिद्धब्रह्मरूपत्वासम्भवात्। न च स्रष्टृत्वस्य शक्त्यात्मना ब्रह्मरूपत्वं, अभिव्यक्त्यात्मनाऽऽगन्तुकत्वमिति वाच्यम्। तदभिव्यक्त्यात्मकस्य स्रष्टृत्वस्य ब्रह्माभिन्नत्वे 'एवं धर्मान्–'इति श्रुतिविरोधापत्त्या तदभिन्नत्वस्याऽऽवश्यकतयाऽऽगन्तुकत्वोक्तिविरोधतादवस्थ्यात् आगन्तुकव्यक्त्यात्मकस्रष्टृत्वात्यन्ताभिन्नतया ब्रह्मणोऽप्यागन्तुकत्वापत्तेश्च। न च विशेषकल्पनया सर्वोपपत्तिः शक्या, विशेषस्याऽपि पूर्वोक्तश्रुत्या ब्रह्मात्यन्ताभिन्नतया घट्टकुटीप्रभातापत्तेः।

किञ्च द्युभ्वाद्यधिकरणादिषु चेतनाचेतनात्मकसर्वजगदाधारत्वस्य ब्रह्मणि भवद्भाष्य एव कथितत्वात् कृत्स्नस्याऽपि जगतो ब्रह्माश्रितत्वेन ब्रह्मधर्मतया 'एवं धर्मान्'इति श्रुत्या ब्रह्मनिरूपितपृथग्धर्मत्वनिषेधेन ब्रह्मात्यन्ताभिन्नत्वात् जीवब्रह्मजडानामद्वैतापत्तिः, माध्वानां द्वैतिन इति शब्दश्च निरर्थकः स्यात्, उक्तरीत्या तन्मते जडस्य ब्रह्मणो जीवस्य चाऽत्यन्ताभिन्नतया भेदरूपविषयासिद्धेरित्यलम्।

मध्वभाष्यजिज्ञासाधिकरणे—

'स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता'

इति व्योमसंहितायामित्यस्ति, तत्र तन्त्रं–पञ्चरात्रादीति जयतीर्थटीका, तेन पाञ्चरात्ररूपतन्त्रोक्तज्ञाने स्त्रीशूद्रद्विजाभासानामधिकारः, न तु द्विजश्रेष्ठानां शिष्टानामिति स्पष्टं प्रतीयते।

मध्वभाष्ये तदन्तरप्रतिपत्त्यधिकरणे—

'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्–'

इति वाराह इति ग्रन्थेन भूतबन्धस्य संसाराख्यबन्धत्वमुक्तम्। आनन्दमयाधिकरणे–

'प्रमादात्मकत्वात् बन्धस्य विमुक्तत्वं च युज्यते–'

इति मध्वभाष्येण भूतसम्बन्धरूपबन्धस्य प्रमादात्मकत्वमुक्तम्, तत्र तत्त्वप्रकाशिका–'तद्गतबन्धस्याज्ञानमूलत्वेनाऽस्वाभाविकत्वात् अस्वाभाविके चाविद्यमानपदप्रयोगादिति भावः' इति, तथा चाऽद्वैतिवद्बन्धरूपसंसारस्याऽज्ञानमूलत्वं स्वीकृतवान् माध्वः किमित्यद्वैतिनं द्वेष्टि ?

'असम्भवस्तु सतोऽनुपपत्तेः'इति सूत्रे मध्वभाष्यतट्टीकयोः 'सतः इति पदं ब्रह्मासाधारणमित्यङ्गीकृतत्वात् जगति सद्विलक्षणत्वमङ्गीकृतमायम्, 'असद्व्यपदेशान्न नेति चेन्न धर्मान्तरेण वाक्यशेषात्'इति सूत्रे भाष्यटीकयोः असत्त्वनिराकरणेन जगति असद्वैलक्षण्यं स्वीकृतम् । तन्मतप्रविष्टास्तु अद्वैत्यङ्गीकृतसदसद्विलक्षणत्वमिथ्यात्वमाक्षिपन्ति, स्वभाष्यटीकाज्ञानात् । न च मध्वमते सच्छब्दः स्वतन्त्रपरः, जगति च स्वातन्त्र्याभावेन स्वतन्त्रविलक्षणत्वमास्ताम्, न तावताऽद्वैत्यभिमतसद्विलक्षणत्वघटितमिथ्यात्वं माध्वाभिमतमिति शङ्क्यम्, भगवत्पादीयाद्वैतभाष्ये वाक्यान्वयाधिकरणे 'यो हि ब्रह्मक्षत्रादिकं जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति, तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं जगत् पराकरोति'इति ग्रन्थेन ब्रह्मण्येव स्वातन्त्र्यस्य जगति तदभावस्य जगति स्वतन्त्रविलक्षणत्वादर्शनप्रयुक्तस्वातन्त्र्यदर्शने मिथ्यादर्शनत्वस्य च कथनेनाऽद्वैत्यभिमतमिथ्यात्वस्य मध्वाङ्गीकृतत्वे विवादासङ्गतेः ।

'तद्गुणसारत्वात्'इति सूत्रे ज्ञानानन्दादिब्रह्मगुणा एवाऽस्य यतः सारः स्वरूपम्, अतोऽभेदव्यपदेशः इति मध्वभाष्येऽपि जीवब्रह्मणोः स्वरूपाभेदोऽद्वैतिवत् कथितः प्रतीयते,मध्वमत आ-

नन्दादिगुणानां ब्रह्मात्यन्ताभिन्नत्वाद्ब्रह्मात्यन्ताभिन्नानन्दादिस्वरूपत्वं जीवस्योक्त्वा ज्ञानानन्दादिब्रह्मगुणा एवेत्येवकारेण ब्रह्मभिन्नत्वनिराकरणात । न च ज्ञानानन्दादिगुणा एवेत्यत्र ज्ञानानन्दादिगुणसदृशज्ञानानन्दादिगुणा इत्यर्थः टीकोक्तरीत्या ग्राह्य इति शङ्क्यम, स्वायत्ते शब्दप्रयोगे भाष्यकारेण गौणवृत्त्यार्थसमर्पकज्ञानानन्दादिगुणा इति निर्देशस्यायुक्तत्वापत्तेः तस्मान्मध्वभाष्यकाररीत्या जीवब्रह्मणोर्भेदपक्षवदभेदपक्षोऽप्यस्तीति निष्प्रत्यूहम,

तदभिध्यानाधिकरणे 'तस्याभिध्यानात योजनात तत्स्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' इति अनादिः बन्धलयस्य तदभिध्याननिमित्तत्वात् लिङ्गात तत्कर्तृत्वं प्रतीयते, किमुत सादेर्जगत इत्येतस्मादेव सर्वसंहारकर्ता विष्णुरिति माध्वभाष्येण अद्वैतमत इव मायाया अनादिबन्धरूपत्वं जीवगतब्रह्मसाक्षात्कारसन्तुष्टभवदभिध्यानरूपज्ञाननाश्यत्वं सादिप्रपञ्चरूपस्य संसारस्य कैमुतिकन्यायेन तदभिध्याननाश्यत्वं चोक्तम्, उक्तं च सुधायाम्–अस्यापरोक्षज्ञाने जाते अन्ते कर्मक्षयान्ते' इति, अत्र मायाशब्देन मायाऽविद्या प्रकृतिरित्यादिशब्दाभिधेयमनाद्येव किमपि द्रव्यमङ्गीकरणीयमिति चोक्तम, सुधाग्रन्थे प्रकृतिरिति पदेन मायाया जगत्परिणामिकारणत्वमद्वैतिवदुक्तम, अविद्याशब्दाभिलप्यत्वं चानाद्येव किमपि द्रव्यामिति अनादित्वं भावरूपत्वं च कथितम 'अज्ञानेनावृतं ज्ञान' मिति गीताभाष्यप्रमेयदीपिकायां स्वरूपज्ञानमविद्ययावृतं, वृत्तिज्ञानं त्वावेद्यां शिथिलयति ब्रह्म प्रकाशयतीति ग्रन्थेनापि अद्वैमतवदेव स्वरूपस्याविद्यावृतत्वमविद्यायाः वृत्तिनाश्यत्वं च कथयति, एवं स्थिते माध्वः स्वस्यापि वृत्तिरूपब्रह्मज्ञानविनाश्याविद्या-

वादित्वजगत्परिणामिकारणानादिमायाबन्धवादित्वादिसाम्येऽपि अद्वैतिनं मायावादित्वादिना दूषयन् स्वसिद्धान्तानभिज्ञ इति प्रतीयते ।

वाक्यान्वयाधिकरणे—

'कृष्णद्वैपायनस्यैव एकदेशविचान्ततम् ।

स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यते

इति मध्वभाष्ये पुराणश्लोकमुदाहृत्योत्तरतन्त्रोदाहृताना-मृषिमतानां सर्वेषामपि सिद्धान्तत्वमेव न पूर्वपक्षत्वमित्युक्तम्, 'स्वामिनः फलश्रुतेरित्यात्रेय'इति सूत्रभाष्यतत्त्वप्रकाशि-कायां ज्ञानकर्मफलमिन्द्रियाधिष्ठातृणां स्वामिनां देवानामेव न कर्तुरित्यात्रेयमतस्य पूर्वपक्षत्वमेवेत्युक्त्वा 'आर्त्विज्यमित्यौडुलो-मिः तस्मै हि परिक्रियते'इति सूत्रे ऋत्विजामिव कर्तुर्यजमानस्यापि किञ्चित् कर्मफलमस्तीत्यस्य सिद्धान्तत्वमुक्तमिति पूर्वोत्तरविरोधः ।

'आभास एव च' इति सूत्रे—

'सोपाधिर्निरुपाधिश्च प्रतिबिम्बो द्विधा स्मृतः ।

जीवः परस्यानुपाधिरिन्द्रचापो यथा रवेः—'

इत्यप्रसिद्धश्रुतिमुदाहृत्य जीवस्य निरुपाधित्वे सति भगवत्प्रतिबिम्बत्वं रविं प्रति इन्द्रचापस्येवेति माध्वभाष्ये क-थितमस्ति, तत्र दृष्टान्ते रव्यभिमुखदेश एव इन्द्रचापो रविप्रतिबि-म्बो दृश्यते, तथा दार्ष्टान्तिके भगवदभिमुखदेश एव भगवत्प्रति बिम्बो जीव इति वक्तव्यम्, यस्मिन् देशेऽभिमुखे रवेः भगव-तश्च प्रतिबिम्बः स एवोपाधिरिति प्रतिबिम्बस्य निरुपाधिक-त्वोक्तिर्युक्तिविरुद्धा, प्रत्यक्षविरुद्धा च । श्रुतिश्च न पठ्यमाना सर्वाङ्गीकृता काचिदुपलभ्यते । अप्रसिद्धश्रुतिश्च स्वस्याप्रसिद्ध-त्वान्न समीचीनयुक्तिं प्रत्यक्षं वा बाधितुं शक्नोति ।

यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम्-'

इति प्रत्यक्षश्रुतौ एतस्मिन् ब्रह्मणि एतत् जीवस्वरूपमाततं, यथा पुरुषे च्छाया आततेति मध्वभाष्यटीकाव्याख्या,तथा भूतलादिप्रदेशोपाधिकच्छायाया निदर्शनत्वोक्त्या जीवस्यापि सोपाधिकं भगवच्छायात्वं प्रतीयते, न तु निरुपाधिकं प्रतिबिम्बत्वं, सूत्रस्थ 'सारवद्विश्वतोमुखम्'इति मध्वभाष्यरीत्या 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः'इति सूत्राक्षरस्वरसालोचने माध्वानां वेदान्तानधिकारः प्रतीयत इत्यलम् ।

'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते'इति सूत्रे मध्वभाष्यं-'मां रक्षतु प्रभुर्नित्यम-'इत्यादिना नानाव्यपदेशादंशो जीवः अन्यः 'परोऽन्यो जीवो नासावस्य कुतश्चनेति, अथ च काषायणश्रुतिः 'ब्रह्म दाशा ब्रह्म कितवा ब्रह्म दासाः'इत्यभेदेनाप्येकेऽधीयते, तथा चाग्निवैश्यश्रुतिः 'अंशो ह्येष परस्य भिन्नं ह्येतदधीयते अभिन्नं तमधीयते' इति । वाराहे च ।

'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः ।
बहुधा गीयते वेदैर्जीवोंऽशस्तस्य तेन तु ॥
यतो भेदेन तस्यायमभेदेन च गीयते ।
अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः'

इत्यस्ति, हेत्वन्तरेणैतत् साधयति-अन्यथेति वक्ष्यमाणाभेदापेक्षया एतच्छ्रुतिद्वयेन जीवेशयोर्भेदाभेदावुच्यते न चान्यतरश्रुतिबाधो युक्तः, न च साक्षाद्भेदाभेदावुपपन्नौ विरोधात्, अतः श्रुतिद्वयान्यथानुपपत्त्या भेदमङ्गीकृत्य अभेदस्थानेंऽशत्वं वक्तव्यमिति भाव इति जयतीर्थटीका, सा पूर्वोत्तरविरुद्धा, अन्यथा चेति सूत्रपदस्य यदपेक्षयेत्याकाङ्क्षाशान्त्यर्थं वक्ष्यमाणा-

भेदेनेति लेखनेन दाशकितवादित्वमधीयत इत्यंशागृहीतदाशाकितवादिश्रुतेः अभेदार्थत्वमङ्गीकृतम् । अन्यथा वक्ष्यमाणाभेदापेक्षयेति लेखनानुपपत्तेः अन्ते चाभेदस्थाने अंशत्वं वक्तव्यमिति लेखनेनाभेदनिर्देशस्यांशत्वार्थत्वमुक्तमिति अत्यन्तविरोधात् ।

किं श्वाऽभेदस्थाने अंशत्वमित्येशे सौत्रान्यथाशब्दस्यांशत्वापेक्षयाऽन्यथात्वरूपानंशत्वार्थत्वं भवेत् । अन्यथापदव्याख्यानतयोदाहृतान्यः परोऽन्यो जीव इति श्रुतिगतान्यशब्दस्यापि अनंशत्वार्थत्वं स्यात् । तथा सत्यंशत्वानंशत्वाभ्यां जीवस्य ब्रह्मांशत्वमुक्तसूत्रात् साधितं स्यात् । अंशत्वे साध्ये अंशत्वानंशत्वयोः हेतुत्वं वदतः सूत्रकारस्योपर्यपि महदसामञ्जस्यं प्रसज्येत । तस्मादसङ्गतैव जयतीर्थटीका । इतोऽप्यसङ्गता तट्टीका,

'यतो भेदेन तस्यायमभेदेन च गीयते ।
अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः–'

इतिभाष्योदाहृतवाराहवचनेन भेदाभेदयोर्मुख्यतयोक्तश्रुतिनिर्दिष्टत्वाभावोक्त्यविशेषे भेदमङ्गीकृत्याभेदस्थानेऽशत्वानिवेशात्त्यताङ्गत्यात्, वैपरीत्यस्यापि वक्तुं शक्यत्वाच्च । न्यायामृते द्वितीयपरिच्छेदे भेदो न स्वरूपमात्रम्, किं त्वन्योन्याभावः स च वस्तुना(नः)मविशेषाभिन्न इति वाक्यं दृश्यते, तदसङ्गतपदार्थान्वयकमिति प्रतीयते तरङ्गिण्यां व्याख्यानान्तरे'च पदयोजनयोक्तवाक्यार्थानुक्तेः । न्यायामृत एव सत्यं ज्ञानमिति लक्षणवाक्यस्थितसत्यपदम् 'अथ यत् सत् तदमृतम् अथ यत् ति तन्मर्त्यम् अथ यद् यम् ते उभे नियच्छाति'इति छान्दोग्यश्रुत्या बद्धमुक्तोभयानियन्तृपरं, तेन सत्यपदेन बद्धमुक्तोभयनियन्तृत्वं ब्रह्मणो लक्षणमुच्यते रूढ्या योगबाधो न शङ्क्यः, 'शास्त्रस्था वा

तन्निमित्तत्वात्'इति न्यायेन शास्त्रप्रसिद्धेर्बलवत्त्वादिति लिखितं,

तन्न, यत्रार्यम्लेच्छप्रसिद्ध्योः समावेशः तत्रार्यप्रसिद्धेः रूढिप्रयोजकत्वं म्लेच्छप्रसिद्धेर्वा तत्प्रयोजकत्वमिति विशये आर्यप्रसिद्धे रूढिप्रयोजकत्वं न म्लेच्छप्रसिद्धेरित्यर्थपरं'शास्त्रस्था वा तन्निमित्तत्वात्'इति न्यायस्य रूढियोगविषयत्वासम्भवादिति ।

इति सर्वतन्त्रस्वतन्त्र भगवत्कलावतारश्रीमदश्वत्थनारायणशास्त्रिणां पौत्रेण तिरुविशल्लूरग्रामाभिजनेन रामसुब्रह्मण्यशास्त्रिणा विरचितमद्वैतमण्डनपूर्वकमध्वचन्द्रिकाखण्डनं समाप्तम्